enriched by the passage of the great stream of traffic between Surat and Golkanda. The country was full of banian, mango, *moha*, cassia, *khajur* or wild date, and other trees. There were vast numbers of antelopes, hares, and partridges, and towards the mountains were wild cows. Sugarcane was grown in many places and there were mills and furnaces for making sugar. The ways were safely guarded.

In 1670 Moro Trimal, one of Shivâji's officers, took Sâler. In 1672 Sâler was besieged by Muhâbab Khân, but a force, sent by Shivâji to raise the siege, after severe fighting, succeeded in driving off the Moghals. In 1664, Prince Muhammad Azam gained the fort by promises and presents. In 1723, the Nizâm established himself as an independent ruler in the Deccan; and, under him, there was a commandant at Mulher and a governor of Bâglân. In 1751, Sâler and Mulher are mentioned as the chief places in Bâglân, where Baglanique, half Marathi and half Gujarati, was spoken. In 1795, after the battle of Kharda, in Ahmednagar, Bâglân was ceded by the Naizâm to the Peshwa, and along with Khândesh, formed the charge of a Sarsubhedâr, named Bâlâji Sakhârâm, who took a prominent part in the Bhil massacres of that time. The fort of Sâler is said to have been given by the Peshwa for dress money to Râni Gahinâbâi, the wife of Govindrâv Gâikwâr. After the Peshwa's defeat, Bâglân passed to the British, by the surrender of the fort of Mulher, on the 3rd of July 1818. Till 1869 Baglan formed part of Khandesh, when it was transferred to Nâsik. In 1875, Bâglân, with its two petty divisions of Jâykheda and Abhona, was divided into two subdivisions, Bâglân with its head-quarters at Satâna, and Kalvan. Sâler is at present in the Navsâri district of H. H. the Mahârajah Gaekwad.[1]

**The Ms. Material.** The present edition of the Râshṭraudhavans'a Kâvya has been based on the single Ms. of the poem hitherto known. It was found accidently by Mr. R. A. Shastry while examining the Mss. collection of a Deccani Brahmaṇa in Baroda. It bears the date of Samvat 1745 and consists of 60 leaves.

1 Much of this information is taken from the Nasik Gazetteer.

# Genealogy of the Bâgulas of Mayûragiri




सुरेश*
कान्हर
सिंहन
जाखराज ( ruled over Kanouj )
हरिहर ( got the fort of Iddir )
यशस्वान् (went to the South and married the daughter of Râmadeva of Devagiri)
सोहड ( went to the South and got the title of Sitâmba for his line )
गजमल्लदेव
माल्लुगि
नानदेव ( took possession of the forts of S'aler, Mayûragiri, and Pisola and fixed his head-quarters at Jaitâpura )
एकदेव
खड्गसेन
राम
वीरसेन
जोपिदेव
नामदेव
भैरव
डोमराज
महादेव
भैरव
जयदर्ण
वीरसेन or वीरमशाह
नेमदेव
नारायणशाह
झाउदेव
लक्षधीर
अम्बदेव
प्रतापशाह
हरिहर
चतुर्भुज
राजसिंह
भैरवसेन

# CONTENTS.

Introduction iv—xxi

Genealogical table xxii—xxiii.

Text 1-118

I राष्ट्रौढवंशोत्पत्तिः

II महेश्वरवरप्रदानः

III शालागिरिमयूरगिरिग्रहणप्रकृतिकलहः

IV नानदेवराज्याभिषेकः

V भैरवसेनोत्पत्तिः

VI भैरवसेनविजयः

VII वीरमसेनविजयः

VIII शालागिरिविजयः

IX नारायणशाहाभिषेकः

X राज्यमहोत्सवः

XI वैरिवीरपरिभवः

XII गोदावरीयात्राप्रसङ्गः

XIII मृगयाविहारवासुदेवपुरीविजयः

XIV वसन्तमण्डितवनविहारः

XV जलकेलि-ऋतुवर्णनम्

XVI नारायणराजधानीमध्याह्नसायाह्नवर्णनम्

XVII कामक्रीडाप्रातःकालवर्णनम्

XVIII तुलापुरुषसोमयागादिविविधधर्मवर्णनम्

XIX शाहसुरादसमागमकौतुकः

XX निजामशाहविजयः

Indexes 1-4

Corrigenda 5



# राष्ट्रौढवंशमहाकाव्यम्।

श्रीमान् भूतसमूहनिर्मितिविधौ यः संस्मृतो वेधसा
गोविन्देन चराचरस्थितिविधौ यः सादरं वन्दितः।
यः स्वात्मन्यखिलप्रपञ्चविलये सम्भावितः शम्भुना
सोऽयं विश्वजनीनचारुचरितो लम्बोदरः पातु नः॥ १॥

दैन्यं याति पितामहे परिहृते दैवेन दैवेश्वरे
भूतानां निवहे निमज्जति महाकल्पान्तकालोदये।
निश्शङ्कं जगदीश्वरो विहरते यन्मण्डलस्याश्रया-
न्मार्तण्डाय जगच्छरण्यचरणाम्भोजाय तस्मै नमः॥ २॥

जायन्ते सकलानि मङ्गलतनोर्भूतानि पूतात्मनो
यस्मान्नूनममूनि येन विभुना जातानि जीवन्ति च।
लीयन्तेऽपि च यत्र सैन्धवशिलाखण्डानि सिन्धाविव
श्रीनाथाय सनातनाय महसे कस्मैचिदस्मै नमः॥ ३॥

यस्य द्वारि पुरारिवारिजभवस्वर्गेश्वरादित्रय-
स्त्रिंशत्कोटिदिवौकसः सुरलतापुष्पोपदापाणयः।
श्रीमानस्तु पुरस्सरोऽस्तु भगवानेवेति सम्भावय-
न्त्यन्योन्यं तमनन्यमानसतया श्रीरामचन्द्रं भजे॥ ४॥

हिमाचलतपःफलं कुचपराजितश्रीफलं
बलं मदनभूपतेर्भवविभूतिविस्फूर्जितम्।
नमद्विबुधमण्डलीमुकुटहीरनीराजितं
महः कनककेतकीकुसुमकान्ति वन्दामहे॥ ५॥

मही तोयं तेजः सततगतिराकाशमिति य-
त्समस्तं त्रैलोक्यं प्रभवति यदिच्छाविलसितम् ।
यदीयो निश्वासः परिणमति वेदैकवपुषा
महादेवो देवो गुरुतरमुदे वो भवतु सः ॥ ६ ॥

मुदा किमपि नृत्यतो नटनरेन्द्रचूडामणे-
श्चिदम्बरसभापतेरमरमौलिभिर्वन्दितम् ।
चमत्कनककिङ्किणीमुखरनूपुरप्रोल्लस-
त्पदाभिनयताडितक्षितिपरागमाराधये ॥ ७ ॥

कल्याणि वाणि करवाणि तवापि कामं
दुर्वारजाड्यहरणं चरणप्रणामम् ।
एषा नवीनरचना मम येन विद्व-
च्चेतश्चमत्कृतिकरी प्रसरीसरीति ॥ ८ ॥

सन्तः समस्तनिगमागमतत्वनिष्ठाः
श्रीमत्प्रणामविधये करसम्पुटोऽसौ ।
एनां ममाभिनवनिर्मितिमादरेण
निर्मत्सरेण मनसा परिशीलयन्तु ॥ ९ ॥

काव्यं कर्त्तुमजानताऽपि यदयं यत्नो मयारभ्यते
राष्ट्रौढक्षितिपालवंशमहिमा सोऽयं समुज्जृम्भते ।
यत्सूते सलिलं नितान्तविमलं चन्द्रोपलः शीतलं
सोऽयं सान्द्रसुधामयस्य महिमा शीतद्युतेः केवलम् ॥१०॥

राष्ट्रौढवंशोद्भवभूमिपाल-
ललाममालां गुणवर्णनीयाम् ।
श्रीशाहनारायणसन्निदेशा-
च्छ्रीरुद्रनामा कविरातनोति ॥ ११ ॥

पुरा कदाचिन्नतये समेता-
न्देवाननुज्ञाप्य गृहाय सद्यः ।
कात्यायनीमर्द्धमृगाङ्कमौलिः
कैलासशैले रमयाम्बभूव ॥ १२ ॥

वाग्देवता वैणिकवाद्यनादै-
र्मनोहरैरप्सरसश्च नृत्यैः ।
गीतामृतैस्तुम्बरुकम्बलाद्याः
सिषेविरे शैलसुतामहेशौ ॥ १३ ॥
परस्परप्रेमभरानुबन्धा-
दभिन्नचित्ताविव शोभमानौ ।
अन्योन्यभूषापणबन्धरम्यं
तत्रान्तरे द्यूतमदीव्यतां तौ ॥ १४ ॥
निजैरपाङ्गैः स्मितसङ्गसाङ्गै-
रनङ्गमूढे सति चान्द्रचूडे ।
मेनाकिशोरी गिरिशस्य सर्वां
चन्द्रादिभूषामचिरादजैषीत् ॥ १५ ॥
भूयो रिरंसामधिगत्य पत्युः
शुचिस्मिता हैमवती बभाण ।
इमानि मे वल्लभ भूषणानि
यदि स्युरन्यानि तदा रमस्व ॥ १६ ॥
इति प्रियाया गिरमाकलय्य
प्रीतिप्रकोपारुणलोचनश्रीः ।
जटाकलापादिवपुःप्रदेशा-
दादाय सर्वाभरणं दिदेश ॥ १७ ॥
रिङ्गत्तरङ्गावलिमौलिगङ्गा-
भङ्गप्रसङ्गाकलितान्यसङ्गा ।
सखीषु विस्मेरमुखीषु बाला
कोपाकुला तानि मुमोच कान्ते ॥ १८ ॥
ततो महेशः स्तुतिभिः प्रणामैः
सन्तोषयामास नगेन्द्रकन्याम् ।
तुष्टा ददौ मन्मथराजधानी
तस्मै भवानी पणभूषणानि ॥ १९ ॥

कात्यायनीपाणिसरोजकोश-
विलोलिताक्षक्षपिताद्‌थेन्दोः ।
गर्भान्वितैकादशवार्षिकोऽभू-
द्‌भूतपूर्वप्रतिमः कुमारः ॥ २० ॥
बालो विशालोदयभूमिपालो
भावीति भाग्याक्षरभासिभालः ।
गौरीगिरीशौ पितरौ स नत्वा
तुष्टाव पुष्टाननचन्द्रशोभः ॥ २१ ॥
आद्यत्रिवेद्याद्यनवद्यविद्या-
विद्योतितब्रह्ममुखैकवेद्यौ ।
त्रिलोकहेतू भवसिन्धुसेतू
युवां चिदानन्दघनौ स्मरामि ॥ २२ ॥
इत्थं कुमारस्तुतिकौतुकेन
प्रमोदपीयूषनिमग्नचित्तः ।
तस्मै वरं साम्बशिवो दयालुः
श्रीकन्यकुब्जेश्वरतामरासीत् ॥ २३ ॥
अत्रान्तरे काचन लातनाख्या
समेत्य देवी गिरिजाहराभ्याम् ।
विलीनभूमीपतिकन्यकुब्ज-
राज्याधिपत्याय शिशुं ययाचे ॥ २४ ॥
साम्बः शिवः प्रार्थितयोगतुष्ट-
स्तस्याः करे यावदिमं दिदेश ।
तावत्सभायां सहसाऽऽविरासी-
च्छ्रीवीरभद्रो नरकेसरीव ॥ २५ ॥
स वीरभद्रः समरैकजैत्रं
खड्गं कुमाराय किल प्रदाय ।
विधाय गौरीशिवयोः प्रणामं
सौवाय सौधाय तिरोबभूव ॥ २६ ॥

एषा भवानीगिरिशौ तदानी-
मामन्त्र्य चादाय करेण डिम्भम् ।
पश्यत्सु देवर्षिगणेषु सद्यो
नभस्तलं विद्युदिवोज्जगाहे ॥ २७ ॥
नारायणो नाम नृपः सुतार्थी
यत्रेश्वरं ध्यायति सूर्यवंश्यः ।
सा रुद्रदत्तेन सहामुनास्मि-
न्नवातरत्काञ्चनमेखलेन ॥ २८ ॥
अलक्ष्यदेहा तमवोचदेषा
राजन्नसावस्तु तवैकसूनुः ।
अनेन राष्ट्रं च कुलं तवोढं
राष्ट्रौ(ष्ट्रो)ढनामा तदिह प्रतीतः ॥ २९ ॥
आकर्णयन्नद्भुतभारतीं तां
ददर्श राजा पुरतस्तनूजम् ।
धनुर्धरं काममनोभिरामं
राजीवनेत्रं मुखनिर्जितेन्दुम् ॥ ३० ॥
प्रमोदबाष्पावृतलोचनोऽसौ
सवेपथुः कण्टकिताङ्गयष्टिः ।
चिराद्भूनन्दनवक्त्रचन्द्र-
विलोकनानन्दतरङ्गसिन्धुः ॥ ३१ ॥
उत्सङ्गमारोप्य निपीय वक्त्रं
मुहुः परिस्पृश्य करोदरेण ।
नृपस्तथा नन्दनमण्डनेन
यथा मुकुन्देन ननन्द नन्दः ॥ ३२ ॥
लाभः सुतालिङ्गनतो न कश्चि-
दालिङ्गने कण्टकडिम्भपीडा ।
सानन्दमालिङ्गितुमेष राजा
नालिङ्गितुं चापि तमाचकाङ्क्ष ॥ ३३ ॥

अथ प्रजानेत्रचकोरचन्द्रं
कुमारमादाय पुरं प्रविश्य ।
चक्रे कृती गौतमदिष्टकाले
स सौवसौराज्यपदाभिषिक्तम् ॥ ३४ ॥

विद्याश्चतस्रः किल गौतमर्षेः
शस्त्रं षडास्यान्निगमं गिरीशात् ।
सानन्दमध्यैष्ट कुशाग्रबुद्धि-
र्व्यजेष्ट वीरः समरेषु शत्रून् ॥ ३५ ॥

सर्वाभीष्टमवाप पण्डितजनो दण्डं च दुष्टो जनो
भूमिर्द्यौरिव दीप्तिमाप परमां सर्वा ननन्दुः प्रजाः ।
मार्त्तण्डान्वयमौलिहीरमुकुटे राष्ट्रौढपृथ्वीपतौ
सन्मार्गेण चतुःसमुद्रपरिखं भूमण्डलं शासति ॥ ३६ ॥

यत्कीर्त्तिस्त्रिजगत्सितीकृतिकृते कृत्वा प्रतिज्ञामिमां
तत्कर्त्तुं विशदीचकार सकलं भूभूधरादि क्षणात् ।
नो शक्ता मलिनारिवक्त्रविशदीकारे प्रतिज्ञाक्षते-
र्व्रीडार्त्तेव विलङ्घ्य सागरगिरीन्नाद्यापि विश्राम्यति ॥ ३७ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नयमादिमो निरगमत्सर्गो निसर्गोज्ज्वलः ॥ ३८ ॥

॥ इति श्रीमदखिलभूपालमौलिशालिमाणिक्यमालामरीचिवीचिसमर्चितचरण-
सरोजमयूरगिरिकेसरिश्रीनारायणशाहमहाराजोद्योजितदाक्षिणात्यरुद्र-
कवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये प्रथमः सर्गः समाप्तः ॥

---

## द्वितीयः सर्गः ।

तदीयसूनुर्महनीयसेनः
पराक्रमन्यक्कृतभीमसेनः ।
शशास भूमीमथ वीरसेनः
प्रतापसंशोषितवीरसेनः ॥ १ ॥

नृपेण तेनाजनि कान्तिवीरः
प्रचण्डमार्तण्डकुलैकवीरः ।
यात्रासु पङ्कीकृतसिन्धुनीरः
परावलीदीपशिखासमीरः ॥ २ ॥

तस्मादभूदद्भुतभागधेयः
श्रीसाहसीयार्जुननामधेयः ।
नारीचकोरीनयनैकपेयः
क्षीरोदधेरिन्दुरिवाप्रमेयः ॥ ३ ॥

तस्मान्महीपालकुलावतंसः
श्रीमल्लिकापूर्वपदोऽर्जुनोऽभूत् ।
तस्यात्मजोऽभूज्जयशीलनामा
प्रौढप्रतापेन सहस्रधामा ॥ ४ ॥

गङ्गाजलो नाम ततो नरेन्द्रा-
न्महीपतिर्धर्मरतिर्बभूव ।
असावतीतेऽपि विशालकाले
मनोभिरामं तनयं न लेभे ॥ ५ ॥

निधाय राज्यं सचिवेषु राजा
तपोवनं प्राप्य वधूसहायः ।
श्रीलातनायाः कुलदेवतायाः
प्रसत्तये भूरि तपश्चचार ॥ ६ ॥

वामे करे कोकिलमुद्वहन्ती
तदन्यपाणौ कमलं भजन्ती ।
वरं वृणीष्वेति नृपं वदन्ती
देवी पुरस्तात्प्रकटीबभूव ॥ ७ ॥
तेजोमयीं तामवलोक्य मूर्तिं
महीपतिर्विस्मयगद्गदाभिः ।
मातर्जयेत्यादिपदावलीभि-
र्नुनाव संसारसमुद्रनौकाम् ॥ ८ ॥
अथ प्रजां प्रार्थयति क्षितीशे
देवीभुजाभ्यां पृथुकावभूताम् ।
तयोर्वरीयान्किल कालसेनो
वीरः कनीयानथ गोपचन्द्रः ॥ ९ ॥
तौ बालवीरौ रणरङ्गधीरौ
समर्प्य गङ्गाजलपार्थिवाय ।
कामस्य दात्री जगतां विधात्री
तिरोबभूवागतपालयित्री ॥ १० ॥
स भूमिपालः कुलपालनार्थं
निनाय बालौ निजराजधानीम् ।
वितायमानक्रतुरक्षणार्थं
रघुप्रवीराविव गाधिसूनुः ॥ ११ ॥
सिंहासनं मण्डयमानमेनं
श्रीकालसेनं स्वपदेऽभिषिच्य ।
स्वयं विमानेन समेत्य राजा
पुरन्दरार्द्धासनमध्युवास ॥ १२ ॥
निर्विश्य सौराज्यसुखं चिराय
श्रीकालसेनः किल गोपचन्द्रम् ।
निधाय राज्ये गुरुगौतमर्षे-
स्तपोवनं तत्सुमना जगाम ॥ १३ ॥

स लातनायाअपि गौतमर्षेः
प्रसादमासाद्य वने तपोभिः ।
ततो महाकालपदारविन्द-
योगादभूदुज्जयिनीनरेन्द्रः ॥ १४ ॥
चक्रेश्वरीदत्तकृपाणभिन्न-
प्रतीपभूपालबलो बलीयान् ।
पुनः शतानन्दसखः स्वकीयां
स कन्यकुब्जां नगरीं जगाम ॥ १५ ॥
अवाप्य चैनां कुलराजधानीं
मनुप्रणीतं चरितं विवृण्वन् ।
दिक्चक्रवालं विजिगीषुराशां
ययावुदीचीं सह सोदरेण ॥ १६ ॥
जित्वा धनं पार्थिवचक्रवर्त्ती
दत्त्वा कुरुक्षेत्रमधि द्विजेभ्यः ।
निनाय गोविन्दपदारविन्द-
कथासुधाभिः कुशलं स कालम् ॥ १७ ॥
काशीश्वरो भूरिबलैस्तदानीं
द्राक्कन्यकुब्जां नगरीमरौत्सीत् ।
वियोगसन्तापभरः शरौघैः
स्मारैरिव प्रोषितपङ्कजाक्षीम् ॥ १८ ॥
ततस्तदाकर्ण्य च कालसेनो
निरस्तसेनोऽवरजेन सार्द्धम् ।
तुरङ्गरूढस्तरसाभिधाव-
न्नध्वन्यगाधां यमुनामपश्यत् ॥ १९ ॥
भयङ्करां नीलगभीरनीरां
कलिन्दकन्यामयमाकलय्य ।
मुहुर्मुहुर्गर्हितबाहुवीर्यः
पश्चात्प्रयातुं मतिमाततान ॥ २० ॥

क्षात्रो जघन्योऽयमिति ब्रुवाणं
बन्धुं रुषा भूपतिराबभाषे ।
रे मुञ्ज्व[1]बुद्धे(?) किमिवापगाया-
मावारपारीणमिहावलम्बे ॥ २१ ॥

इत्थं सचिन्ते सति कालसेने
छित्वा शिरः स्वं स्वयमेव सद्यः ।
कलिन्दकन्याजलमुत्तरीतुं
कबन्धमस्मै विततार बन्धुः ॥ २२ ॥

नृपः पतङ्गेन पतङ्गकन्या-
मुत्तीर्य घोरं समरं विधाय ।
निहत्य काशीपतिसैन्यभारं
पुरीं मृगाक्षीमिव निर्विवेश ॥ २३ ॥

ततो नृपः सोदरजीवनार्थं
चक्रेश्वरीं सेवितुमाससार ।
संपूज्य तां पूजयितुं स्वमूर्ध्ना
पाणौ कृपाणीमुररीचकार ॥ २४ ॥

हस्ते तमालम्ब्य जगत्त्रयाम्बा
वरं वृणीष्वेति गिरं जगाद ।
मातः परासोर्मम बान्धवस्य
प्राणान्प्रयच्छेति वरं ययाचे ॥ २५ ॥

आनाय्य चिल्लीचटकाशरीर-
संधारिणीभ्यां वनदेवताभ्याम् ।
शिरःकबन्धाववनीशबन्धोः
सा सन्दधे प्राणसमूहधाम्नी ॥ २६ ॥

---

1 may be मन्द.

यत्तिर्यगासक्तममुष्य शीर्षं
भयानकं भासुरमर्भकाणाम् ।
तस्मादसौ बागुल इत्युदारां
वाणीमभाणीदुचितां भवानी ॥ २७ ॥
ये चन्द्रगोपक्षितिपस्य वंश्या-
स्ते बागुला इत्यभिधाय देवम् ।
ख्याता भविष्यन्ति समस्तलोके
तमेवमुक्त्वा जननी तिरोऽभूत् ॥ २८ ॥
ततः समागत्य समेतसैन्यः
प्रतापदूरीकृतविश्वदैन्यः ।
बुभोज भूयः सुभुजः सबन्धुः
स कन्यकुब्जानगराधिपत्यम् ॥ २९ ॥
श्रीकालसेनः किल गोपचन्द्रं
महारथस्तत्र पुरेऽभिषिच्य ।
ज्योतिर्मयब्रह्मवतीमवन्तीं
पुरीमधिष्ठाय चकार राज्यम् ॥ ३० ॥
भूलोकचन्द्रादथ गोपचन्द्रा-
दभून्महापूर्वकलिङ्गदेवः ।
यो बागुलो बाहुबलादजैषी-
त्कर्णाटलाटाङ्ककलिङ्गवङ्गान् ॥ ३१ ॥
तस्मादथासीत्त्रिपुरारिनामा
भूपालजम्बालनिदाघधामा ।
तदीयसूनुः किल खड्गसेनः
सौराज्यसिंहासनमध्युवास ॥ ३२ ॥
तस्मादभूदर्जुनभूमिपालः
कण्ठेलसन्मौक्तिकरत्नमालः ।
ततो नृपोऽजायत भीमसेनः
सङ्ग्रामभूमाविव भीमसेनः ॥ ३३ ॥

एतत्तनूजोऽथ जुगोप भूमिं
बल्लालदेवः कृतदेवसेवः ।
बल्लालदेवादथ वत्सराजः
श्रीवत्सराजादथ नागनाथः ॥ ३४ ॥
तस्यापि सूनुर्नयनाभिरामः
सम्पूर्णकामोऽजनि पर्शुरामः ।
श्रीराघवस्तस्य बभूव सूनुः
श्रीराघवध्यानसमीरसूनुः ॥ ३५ ॥
तस्मान्महीपालविरावपूर्वः
पालोऽभवत्पालितविश्वलोकः ।
अमुष्य सूनुः समभूत्सुरेशो
यः सौरपालीं नगरीं जिगाय ॥ ३६ ॥
तदङ्गजः कान्हरनामकोऽभू-
द्यशोभिराशोभितसर्वलोकः ।
तस्माद्भूद्भूपतिचक्रवर्त्ती
श्रीसिंहनः सिंहसमानवीर्यः ॥ ३७ ॥
विज्ञातसर्वार्थविचारतत्वा-
श्चत्वार एतस्य सुता बभूवुः ।
तेषां महीयान्महनीयकीर्त्तिः
श्रीजाखराजोऽजनि पुण्यमूर्त्तिः ॥ ३८ ॥
तस्यानुजन्मा हरिशब्दपूर्वः
श्रीमान् हरोऽभूच्चरितैरपूर्वः ।
जातो यशस्वाननुजोऽस्य गेय-
स्तस्यानुजः सोहडनामधेयः ॥ ३९ ॥
श्रीकन्यकुब्जानगराधिराजे
भूमण्डलं शासति जाखराजे ।
जगाम नत्वा विनयी जनेशं
तद्बन्धुवर्गो गुणवान्विदेशम् ॥ ४० ॥

ते सर्वभूपानवधार्य कूपा-
न्कुलावतंसा नरराजहंसाः ।
गुणार्णवश्रीजयसिंहदेव-
पुरीमविन्दन्नमहल्लसंज्ञाम् ॥ ४१ ॥

पुरस्कृतास्ते गुणिनोऽधिजग्मु-
स्तस्याश्रयं प्राप्य गुणातिरेकम् ।
रथ्यागतो हार इवाम्बुजाक्षी-
वक्षोरुहाम्भोजसमाश्रयेण ॥ ४२ ॥

वैदेशिकैस्तैर्जयसिंहदेव-
भूपाश्रयात्प्रापि विशेषतः श्रीः ।
गोविन्दवक्षस्थललम्बनेन
श्रीकौस्तुभेनेव समुद्रजेन ॥ ४३ ॥

प्रौढप्रतापैरखिलैरमीभि-
स्तदाश्रयाद्दिग्वलयं विजिग्ये ।
विवेकसङ्गाद्भवभीतिजालं
धर्मार्थकामैरिव निर्विरामैः ॥ ४४ ॥

स्ववीर्यलब्धं हरिशब्दपूर्वो
हरः स्वतन्त्रं पदमाप्तुकामः ।
श्रीसारणेशं तपसा सिषेवे
विना शिवार्चां नहि राज्यलाभः ॥ ४५ ॥

परमसारणशङ्करपूजनै-
र्बहुतिथे दिवसेप्यतिवाहिते ।
अनवलोक्य फलं विधुरोऽकरो-
द्धरिहरोऽरिहरो हरवर्णनम् ॥ ४६ ॥

कर्णोत्तंसितनागा नागाजिनविरचितोत्तरासङ्गा ।
सुरनरदनुजालम्बा साम्बामूर्त्तिराद्रिमा जयति ॥ ४७ ॥

सादितासुरकदम्बकीर्त्तये
देवदैत्यनरगीतकीर्त्तये ।
कल्पितत्रिभुवनैकपूर्त्तये
मामिका प्रणतिरष्टमूर्त्तये ॥ ४८ ॥

भवभयभञ्जनं जनेशं भसितभुजङ्गमभोगभूषिताङ्गम् ।
सकलभुवनसंभवं भवानीविदितमहाविभवं भवं भजामि ॥४९॥

पातु मां पार्वतीचेतःकुमुदानन्दचन्द्रमाः ।
शङ्करः कोटिमार्त्तण्डप्रचण्डद्युतिमण्डलः ॥ ५० ॥

यत्रेयं भगवति जाग्रति त्रिलोकी
जागर्त्ति स्वपति विलीयते क्षणेन ।
एकस्मै गततमसे नमोऽस्तु तस्मै
कस्मैचित्त्रिभुवनभूषणाय पुंसे ॥ ५१ ॥

वैकुण्ठे सति कुण्ठे धातरि कातरीभवन्मनसि ।
शक्रे चक्रितदैवे कवलितगरलः शिवो जयति ॥ ५२ ॥

यत्पौरन्दरमाधिपत्यमतुलं चक्रे स लङ्केश्वर-
स्तन्माहेश्वरलोचनाञ्चलचमत्कारैकलीलायितम् ।
यन्निर्वाणमवाप राघवशरव्रातेन कालीपते-
स्तत्कैलासनिवासकम्पकुपितभ्रूक्षेपविक्षोभितम् ॥ ५३ ॥

मनसा वचसा च कर्मणा वा
भवतो नान्यदुपास्यदैवतं मे ।
इह विश्वमनस्सरोजहंसो
भगवानेव महेश्वरः प्रणम्यः ॥ ५४ ॥

इति नुतिवचनप्रसन्नगौरी-
परिवृढपादसरोरुहप्रणीतम् ।
हरिहरधरणीपतिः सुराज्यं
चिरतरमिह्निरभूधरे चकार ॥ ५५ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिपवित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये शम्भुवरप्रदानललितः सर्गो द्वितीयोऽगमत् ॥ ५६ ॥

इति श्रीमदखिलभूपालमौलिशालिमाणिक्यमालामरीचिवीचिसमर्चितचरणसरोजमयूर-
गिरिकेसरिश्रीनारायणशाहमहाराजोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये महेश्वरवरप्रदानो नाम द्वितीयः सर्गः ॥

---

## तृतीयः सर्गः ।

ततो यशस्वी नृपसोहडश्च
द्वौ भ्रातरौ जग्मतुरग्रजस्य ।
श्रीकन्यकुब्जानगरेश्वरस्य
पादारविन्दार्चनसाभिलाषौ ॥ १ ॥

श्रीजाखराजक्षितिनायकस्य
पादारविन्दं शिरसाऽभिवन्द्य ।
भूयोऽपि राष्ट्रौढकुलाद्रिसिंहौ
दिक्चक्रवालं ययतुर्विजेतुम् ॥ २ ॥

दस्यूनमुद्रान्[1]पथिलंदभद्रा-
नापीवनीतोरणमालवासान् ।
निहत्य तं चाऽथ विजित्य देशं
द्विजाग्रहारं कुरुतः स सारम् ॥ ३ ॥

जटीश्वरानुग्रहवृद्धतेजाः
श्रीसोहडो नाम महीमहेन्द्रः ।
राष्ट्रप्रदामिष्टिमियाज यज्वा
ऋत्विक्प्रदेयीकृतभूरिवित्तः ॥ ४ ॥

---

१ may be लब्धमुद्रान्.

तस्मादकस्मान्निरियाय धन्या-
पुण्येति देवीद्वयमग्निकुण्डात् ।
राजानमाहेति भवानजय्यः
सङ्ग्रामरङ्गे भविता रिपूणाम् ॥ ५ ॥

स्वदेवताभिः सह नूनमावां
सिते त्वमम्बे परिपूजयस्व ।
अतः परं त्वत्कुलबागुलानां
भविष्यतीदं बिरुदं सिताम्बम् ॥ ६ ॥

ताभ्यामिति प्राप्तवरो नरेन्द्रो
जेतुं ययौ दक्षिणदिक्प्रदेशम् ।
स पिप्पलग्राममवाप्य तत्र
व्यनीनशन्नाहलमण्डलानि ॥ ७ ॥

ततः समुत्थाय विधाय माटी(?)-
माटीकमानः किल वारिसङ्ख्यम् ।
लोकानशेषानवबाधमाना-
नमारयत्पञ्च शतं स भिल्लान् ॥ ८ ॥

स वारिसङ्ग्राममवेक्ष्य रम्य-
मानन्दमाविन्दत भूमिपालः ।
तां राजधानीमदधात्तदानी-
मतिष्ठिपत्तत्र नृपासनं च ॥ ९ ॥

श्रीसोहडाग्रप्रभवो यशस्वा-
न्स रामदेवस्य सुतां विवाह्य ।
दुराक्रमे देवगिरौ निषण्णो
जुगोप पल्लीं तलकुङ्कणाख्याम् ॥ १० ॥

---

१ may be "राटी".

तस्मादथासीद्गजमल्लदेवो
विजित्वरो गुर्जरमालवानाम् ।
अल्लावदीनं यवनाधिनाथं
निहत्य यस्तस्य महीं जहार ॥ ११ ॥
तस्माद्भून्मालुगि नाम भूपः
सङ्ग्रामविद्रावितवैरिभूपः ।
रणेऽजयद्यो नवलक्षसङ्ख्य-
धनुर्द्धराधीश्वररामराजम् ॥ १२ ॥
हेमाद्रिनाम्नः सचिवोत्तमस्य
प्रणामपूर्वप्रचुरार्थनाभिः ।
श्रीमालुगिर्देवगिरीशरामं
सामन्तमाधाय पुनर्मुमोच ॥ १३ ॥
पाणिग्रहं कीर्त्तिमृगेक्षणायाः
सङ्ग्रामकेलीभवने विधाय ।
विनिर्जितद्वादशराजचक्रे
सहस्रधामेव रराज राजा ॥ १४ ॥
दिवं गते मालुगिभूमिपाले
तदीयसूनुः किल पेयिदेवः ।
दिक्सुन्दरीभूषणकीर्त्तिशाली
सिंहासनं पित्र्यमलञ्चकार ॥ १५ ॥
यो लङ्किवंशप्रभवं नवीन-
साहस्रदेशेश्वरमाहवेषु ।
विजित्य वीरेश्वरमायिदेवं
महापुरीं बारडुलीमधाक्षीत् ॥ १६ ॥
तस्माद्भूद्भूपतिनानदेवः
सुवर्णपूर्णीकृतभूमिदेवः ।
प्रतीपवीरानवजित्य युद्धे
यः पत्तनं जैत्रपुरं चकार ॥ १७ ॥

विजित्य यो गोपपतिं महेशं
जग्राह शालागिरिमुच्चशालम् ।
यन्मूर्ध्नि दीपेन सुरा निशीथे
तमिस्रपक्षेऽपि सुखेन यान्ति ॥ १८ ॥
कल्पद्रुमाणां नवपल्लवानि
स्फुरत्प्रसूनानि च कौतुकार्थम् ।
रामा यमारुह्य मनोभिरामाः
करेण चिन्वन्त्यपरिश्रमेण ॥ १९ ॥
यस्यान्तिके सञ्चरदिन्दुबिम्बं
समुल्लसन्मन्दिरहंसबुध्या ।
पुनः पुनः स्मेरमुखाः कुमाराः
करारविन्देन परिस्पृशन्ति ॥ २० ॥
यन्मेखलालम्बिबलाहकौघे
तडिल्लताविभ्रममुद्वहन्तीम् ।
पत्युः समीपेऽपि विराजमानां
सपत्ननारीं न विवेद बाला ॥ २१ ॥
यस्मिन्नगेशो नयनाञ्चलेषु
निधाय कालाञ्जनमङ्गनाभिः ।
सुधाकरे यन्निरणेजि पाणिः
स कालिमाऽद्यापि सुधांशुबिम्बे ॥ २२ ॥
यस्येन्द्रनीलावलिशालिशृङ्ग-
मुत्तुङ्गमाचुम्बति भानुबिम्बे ।
राहूपरागभ्रमतो द्विजेन्द्राः
स्नानादिकर्म द्रुतमाचरन्ति ॥ २३ ॥
यस्मिन्मृगाक्ष्यो मुखसाम्यलक्ष्मी-
परीक्षणाय क्षणधीरमिन्दुम् ।
कर्तुं क्षिपन्ति श्रवणावतंस-
यवाङ्कुरं चन्द्रकुरङ्गवक्त्रे ॥ २४ ॥

तारामणीन्दर्शयतेऽपि दातुं
प्रतिक्षपं प्रास्रवतेऽपि यत्र ।
नार्यो मृगाङ्काय मुखारविन्द-
विलासमद्यापि न शिक्षयन्ति ॥ २५ ॥
यो वेधसा कौतुकिना हिमाद्रि-
विन्ध्याद्रिहेमाचलमन्दरेभ्यः ।
साराणि वस्तून्युपनीय चक्रे
लङ्केशशैलादपि दुर्विलङ्घ्यः ॥ २६ ॥
आस्थाय शालागिरिमीदृशं तं
चिरान्मयूराचलमग्रहीत्सः ।
ततो जगच्छायनृपं क्रमेण
विजित्य जग्राह पिशोलशैलम् ॥ २७ ॥
जित्वा नृपेभ्यो वसु नानदेवः
श्रीयज्ञखेटे मखमाततान ।
अध्वर्यवे गौतमगोत्रजाय
तद्दक्षिणं चादित यज्ञखेटम् ॥ २८ ॥
आभीरभूपालकुलैकसिंहं
पराक्रमोत्सारितवीरसिंहम् ।
महीपतिर्मुक्तमुकुन्दसेवं
जिगाय जन्ये जगरीकदेवम् ॥ २९ ॥
ततः कदाचित्स सुखोपविष्टो
जैत्राख्यया वल्लभया कयाचित् ।
द्विजाग्रहारादिचिकीर्षयैव
सम्प्रार्थितो जैत्रपुरं व्यतार्षीत् ॥ ३० ॥
सा तत्र जैत्राभिधपद्मनेत्रा
धरासुरेभ्यो विततार सारम् ।
तुरङ्गमातङ्गसुवर्णरूप्य-
निकेतनक्षेत्रनवाम्बरादि ॥ ३१ ॥

पुराणि सा षोडश वेदविद्भ्यो
महीसुरेभ्यः प्रददौ यथावत् ।
परश्शतारामतडागवापी-
कूपादि भूपालवधूस्ततान ॥ ३२ ॥
इत्थं नृपे धर्मवधूसहाये
तस्मिंश्चिरात्कुर्वति धर्मराज्यम् ।
अत्रान्तरे कोटितुरुष्कसैन्यै-
र्दिल्लीश्वरः शालगिरिं रुरोध ॥ ३३ ॥
कर्णाटलाटोत्कलचोलगौड-
कलिङ्गवङ्गादिसमस्तदेशान् ।
विजित्य यो रामगिरेरधीशं
श्रीरामरामं(जं) समरे जघान ॥ ३४ ॥
भूपालदिल्लीश्वरयोस्तदानीं
संवत्सरं घोरतरो रणोऽभूत् ।
दिल्लीपतेः सैन्यबलं विशालं
श्रीनानदेवस्य तु दुर्गमेव ॥ ३५ ॥
ते नानदेवं शतसप्तवीराः
सर्वैरुपायैः समरेषु जघ्नुः ।
दिवं गते तत्र तदीयसूनु-
रध्यास्त सिंहासनमेकदेवः ॥ ३६ ॥
रणेषु हत्वा यवनानशेषान्
भीमात्मजं विञ्झलदेवराजम् ।
जित्वा च शालागिरिवर्त्तमानो
निष्कण्टकं राज्यमसौ चकार ॥ ३७ ॥
ततस्तदीयस्तनयो बुभोज
भूपीठमावारिधि खड्गसेनः ।
गुरुं पुरस्कृत्य मखैरनेकै-
र्योविष्णुमीजे पशुबन्धमुख्यैः ॥ ३८ ॥

स मल्लिकाख्यं यवनाधिनाथं
जित्वाष्टसाहस्रमुगूलवीरान् ।
हत्वा ललिङ्गाचलमस्य नाथं
धृत्वा ददौ बन्दिकृते सभूषम् ॥ ३९ ॥
वेदाभिधाने नगरे कठोरै-
रावेष्टितो यो यवनेन्द्रवीरैः ।
समेत्य सद्यः परिभूय सर्वा-
नमूमुचद्दल्लवरामराजौ ॥ ४० ॥
तस्माद्भूद्वागुलवंशहीरः
श्रीरामनामा रणरङ्गधीरः ।
पयोधिमध्यस्थगिरौ निगूढं
जघान योऽसौ कमलक्षितीशम् ॥ ४१ ॥
तदीयसूनुः किल वीरसेनः
सिंहासनं पैतृकमाससाद ।
यो यावने लोहपुरे समन्ता-
दकालहोलोत्सवमाततान ॥ ४२ ॥
दिवं गतेऽस्मिन्सति तत्किशोरे
सिंहासनाध्यासिनि जोपिदेवे ।
तदाऽचिराद्र्भकनायकत्वा-
त्तद्धर्मराज्यं शिथिलाङ्गमासीत् ॥ ४३ ॥
राष्ट्रं समन्तादभिवर्त्तमान-
महीभृतामामिषभावमाप ।
असावधाने सति नाम चित्ते
नाक्रम्यते किं वपुरेव गृध्रैः ॥ ४४ ॥
दिनकरकुलहीरवीरसेन-
क्षितिपकिशोरनरेन्द्रमेदिनी सा ।
बहलमदगजेन्द्रमध्यवल्ग-
त्कलभकरस्थसरोजिनीव रेजे ॥ ४५ ॥

तत्र कोऽपि कलहः प्रकृतीनां
सारवस्तुहरणाय बभूव ।
वर्त्मनीव पतितामिषपेशी-
भक्षणाय सरमातनयानाम् ॥ ४६ ॥

केचित्तत्र गिरीन्द्रदुर्गमपरे कोशं तुरङ्गान्परे
निन्युः केऽपि मदान्धकुञ्जरकुलं वाराङ्गनाः केचन ।
इत्थं लुण्ठनघोरणीं क्षितिभुजामालोक्य पाटच्चरै-
र्मार्गोऽसौ दिवसेऽपि दुर्गमतरः कष्टं तदानीमभूत् ॥ ४७ ॥

इत्थं वीक्ष्य प्रकृतिपुरुषाः केऽपि निर्विण्णचित्ताः
सैषा शालागिरिनरपतेरुत्तमा राज्यलक्ष्मीः ।
माभूद्वैरिक्षितिपतिकरालम्बिनीति प्रशस्तं
ज्ञात्वा जग्मुः प्रथमनृपतेः सोदरं नानदेवम् ॥ ४८ ॥

तं मन्त्रिप्रकरमवेक्ष्य नानदेवः
साम्राज्यं त्वधिगतकल्पमेव मेने ।
तद्युक्तं विधिरपि कोविदः क्रियाणां
प्रारम्भं घटयति भाविकानुकूलम् ॥ ४९ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये प्राकृतमण्डलोत्थकलहः सर्गस्तृतीयोऽगमत् ॥ ५० ॥

॥ इति श्रीमदखिलभूपालमौलिशालिमाणिक्यमालामरीचिवीचिसमर्चितचरण-
सरोजमयूरगिरिकेसरिश्रीनारायणशाहमहाराजोद्योजितदाक्षिणात्यरुद्र-
कवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये शालागिरिमयूरगिरिग्र-
हणप्रकृतिकलहो नाम तृतीयः सर्गः ॥

---

## चतुर्थः सर्गः ।

सोदरस्थविरमन्त्रिसत्क्रियां
संविधाय नयकोविदस्ततः ।
नानदेवनृपतिः सभागृहं
शिश्रिये सचिवबन्धुभिः समम् ॥ १ ॥

गम्यतामिह मया न वेति तान्
पृच्छति क्षितिपतौ विचक्षणे ।
एक आह सचिवो जरत्तरः
पश्यतां सकलमन्त्रिणां पुरः ॥ २ ॥

आर्य कार्यजलधौ मनीषिणो
मन्त्ररूपतरणिं वितन्वते ।
सर्वकर्मणि विपद्विपक्षिता
कार्यसिद्धिरिह पाक्षिकी मता ॥ ३ ॥

राज्यदानविधये महीपते-
र्मार्ग एव वहनाय वा पुनः ।
त्वां नयन्ति किमितीति वेद को
मन्त्रिणां दुरवबोधमिङ्गितम् ॥ ४ ॥

मन्त्रिणः किमु निसर्गवैरिणा
त्वत्सहोदरनरेन्द्रसूनुना ।
प्रेषिता इह भवज्जिघांसया
किं स्वयं नु युवयोर्वधैषिणः ॥ ५ ॥

श्रूयते कतिचिदेषु मन्त्रिणो
म्लेच्छभूपतिमुपाश्रिता इति ।
किन्त्वमी त इतरेऽथवा ततो
गन्तुमर्हसि न तत्र सर्वथा ॥ ६ ॥

इत्युदीर्य वचनं मुनिव्रते
तत्र मन्त्रिणि शिरः प्रकम्पयन् ।
कोऽपि वृद्धसचिवो महीपतिं
वक्तुमित्थमुपचक्रमे वचः ॥ ७ ॥
देव पाक्षिकविपत्तिशङ्कया
न क्रियेत यदि काचन क्रिया ।
लोक एष तदजीर्णशङ्कया
भोजनेऽपि न कदा प्रवर्त्तताम् ॥ ८ ॥
वंशजामुपगतामपि श्रियं
कामिनीमिव गुणैकलालसाम् ।
स्वामुपेक्ष्य कुरुतेऽन्यगामिनीं
यस्तदीयमयशो विचारय ॥ ९ ॥
भूपते दलपतेरुपाश्रया-
त्सौवदुर्गनिचये वशीकृते ।
म्लेच्छभूमिपतिभिस्तदा कथं
हन्त बागुलगतिं विचारय ॥ १० ॥
भूतिभञ्जकमपास्य संशयं
गन्तुमत्र कुरु तूर्णमुद्यमम् ।
तन्निहत्य कुलराज्यघातकान्
बन्धुसूनुमभिषिञ्च तत्पदे ॥ ११ ॥
बालनायकतया भिदां गतं
वीक्ष्य राष्ट्रमधिपस्य मन्त्रिणः ।
त्वां प्रगल्भनृपमन्वयोद्भवं
संविहाय शरणं व्रजन्तु कम् ॥ १२ ॥
इत्थमस्य वचनामृतं हितं
नीतिरीतिचतुरं मनोहरम् ।
सर्वसभ्यजनताभिनंदितं
मेदिनीपतिरुरीचकार तत् ॥ १३ ॥

किं परेण वचसा मया स्वयं
कार्यमेव कुलराज्यरक्षणम् ।
इत्थमुक्तवति भूपतौ गुरु-
र्गौतमान्वयभवोऽप्यवोचत ॥ १४ ॥
वेधसोऽपि सुतरामभीप्सितां
निर्णयामि भवति क्षितीशताम् ।
अत्र कार्यविषये विलम्बनं
केवलं पुरुषकारकम्पनम् ॥ १५ ॥
मा दराद्य कुरु राष्ट्रदं मखं
सोमयागमथवाऽत्र दक्षिणम् ।
तूर्णमेव निजवंशमेदिनी-
कामिनीकरपरिग्रहं कुरु ॥ १६ ॥
इत्यवेत्य वचनं पुरोधसो
राष्ट्रदं मखमियाज भूपतिः ।
ऋत्विजोऽथ सकलानपि द्विजान्
वृत्तिधेनुकनकैरपूपुजत् ॥ १७ ॥
मन्त्रिणः स्वसुहृदस्तथा सखीन्
पार्श्वगानपि यथोचितं नृपः ।
अम्बराभरणरत्नहेमभि-
स्तोषयन्नविशदङ्गनागृहम् ॥ १८ ॥
पार्थिवोऽथ निशि निद्रयाश्रितः
स्वप्नवृत्तिषु पवित्रविग्रहः ।
कामपि प्रियतमां मदालसां
पर्यरब्ध कठिनोन्नतस्तनीम् ॥ १९ ॥
आरुरोह मदमन्दगामिनं
घण्टिकारवमनोहरं गजम् ।
सुन्दरीचमरयुग्मवीजितः
सन्ददर्श नटनर्त्तनोत्सवम् ॥ २० ॥

प्रातराहितयथोचितक्रियः
प्राप्तभूषणविधिः सदो गतः ।
भूपतिर्द्विजगणाय सादरं
रात्रिवृत्तमखिलं न्यवेदयत् ॥ २१ ॥

पार्थिवं निजगदुर्विपश्चित-
स्तन्निमित्तमवधार्य मङ्गलम् ।
सन्महेऽद्य भविता भवानहो
सर्वभूमिपतिमण्डलेश्वरः ॥ २२ ॥

दैवविद्भिरवनीसुपर्वभिः
सन्निवेदितशुभग्रहोदये ।
राज्ययोगिसमये प्रतापवा-
नारुरोह नृपतिस्तुरङ्गमम् ॥ २३ ॥

स व्रजन्प्रथमतः सुवासिनीं
वीक्ष्य गामथ पुरः सतर्णकाम् ।
दक्षिणानथ मृगानसाववै-
न्मेदिनीं करतलाग्रवर्त्तिनीम् ॥ २४ ॥

यावदेति स गिरेरुपत्यकां
तावदस्य नृपतेरधित्यकाम् ।
सैनिकैः समधिरुह्य वैरिण-
स्तान्निगृह्य जगृहे महीधरः ॥ २५ ॥

शालशैलमधिगम्य दुर्गमं
दुष्टनिग्रहविधानकोविदः ।
प्राड्विवाकमतमास्थितोऽवनिं
नानदेवनृपतिः शशास ताम् ॥ २६ ॥

राज्यकारिणि चिराय सादरे
नानदेवधरणीपुरन्दरे ।
येऽन्यपर्वतनिवासिनः परे
तेऽपि शङ्कितभयाश्चकम्पिरे ॥ २७ ॥

अन्यदुर्गविजयाय पार्थिवे
प्रस्थिते द्रुतमदुद्रुवन्नृपाः ।
तावदेव वनचारिणो मृगा
नैव यावदुपयाति केसरी ॥ २८ ॥

राज्यमेतदखिलं तवैव भो-
स्तन्निमित्तमयमुद्यमो मुधा ।
रक्ष रक्ष शरणागतानिति
प्रोचुरेनमिति केऽपि भूभृतः ॥ २९ ॥

कोशजातमखिलं चिरार्जितं
संविधाय नृपतेरुपायनम् ।
अद्य नस्त्वमिह सौवसेवकान्
स्थापयेति कतिचित्तमूचिरे ॥ ३० ॥

यावनक्षतजपूरवाहिनीं
सम्प्रतीर्य भुजवीर्यनौकया ।
अभ्रचुम्बिशिखरं नृपः क्षणा-
दग्रहीदथ मयूरभूधरम् ॥ ३१ ॥

चामराचलपिशोलपर्वतौ
नानदेवनृपतिर्गृहीतवान् ।
कीर्त्तिदूतिवचसा वशीभव-
न्मेदिनीप्रणयिनीकुचाविव ॥ ३२ ॥

स्तम्भाभिधानगुरुदेवरमालशैलौ
दोर्दण्डखण्डितविपक्षबलो गृहीत्वा ।
अन्यानपि प्रचुरदुर्गमदुर्गशैलान्
जग्राह विग्रहपरिग्रहकालरुद्रः ॥ ३३ ॥

गोदावरीतटभुवं समुपेत्य वीरः
पाणिग्रहं मधुरकीर्त्तिसरोरुहाक्ष्याः ।
दृप्यत्तुरुष्कधरणीपतिवीरघोर-
सङ्ख्यस्वयंवरमहे कलयाञ्चकार ॥ ३४ ॥

साहाय्यमाधाय स मालवानां
भर्तुर्जिगीषोः किल मण्डपाद्रिम् ।
जित्वा ततो दक्षिणभूमिपालं
द्राक् वैदुरीं नाम पुरीमलुण्ठत् ॥ ३५ ॥

अथ सपदि महेन्द्रराजधानी-
ललितमनन्तपुरं समेत्य भूपः ।
सममदित समस्तदानजातं
कनकतुलापुरुषादिकं द्विजेभ्यः ॥ ३६ ॥

राष्ट्रं ब्रह्ममयं चकार सकलानानीय यद्ब्राह्मणा-
न्शब्दब्रह्म यदध्यजीगपदथो नैश्चिन्त्यमाधाय तान् ।
यन्नित्यं जनकेश्वरादपि परब्रह्मैकनिष्ठो भव-
न्नानब्रह्मतया प्रसिद्धिमगमद्ब्रह्माण्डभाण्डे ततः ॥ ३७ ॥

अधिगतवति भूमीकामुके तत्र जैत्रा-
नगरमधि पुराणं पित्र्यसिंहासनं तत् ।
अथ परमममन्दानन्दसन्दोहपूर्णाः
कथितमनुबभूवुर्नागरा रामराज्यम् ॥ ३८ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्विजयाभिषेकरसिकः सर्गस्तुरीयो ययौ ॥ ३९ ॥

इति श्रीमदखिलभूपालमौलिमाणिक्यमालामरीचिवीचिसमर्चित चरणसरोजश्रीमयूर-
गिरिकेसरिश्रीनारायणशाहमहाराजोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये राज्याभिषेको नाम चतुर्थः सर्गः ॥

---

## पञ्चमः सर्गः ।

नानदेवनृपतेरथ सूनुः शोभया विजितमाधवसूनुः ।
तीर्थसार्थविनियोजितयूपः क्ष्मां जुगोप किल भैरवभूपः ॥१॥

तेन कल्पतरुरीप्सितदानैः सम्पदा च सुरनायकलक्ष्मीः ।
विद्विषोऽपि सकला भुजसारैः सूर्यवंशतिलकेन विजिग्ये ॥२॥

अर्थिचातकघनः कुलवाटीचन्दनो रिपुभुजङ्गसुपर्णः ।
यश्च बो००लकडिण्डिममुख्यानेकसत्कविपिकालिरसालः ॥३॥

कामिनीनयनपालिचकोरीचन्द्रमाश्चतुरवीरधुरीणः ।
यश्च गुर्ज्जरमहीपुरुहूतप्रेषितोल्लसदुपायनशाली ॥ ४ ॥

मेदिनीवलयपालनशीलो डोमराज इति तत्तनयोऽभूत् ।
यः सपत्नजनकुञ्जरसिंहः शिश्रिये गिरिधुरीणमयूरम् ॥ ५ ॥

यत्प्रतापतपनो रिपुनारीनेत्रनीरतटिनीं विततान ।
यद्यशोहिमकरोऽखिलविद्वद्दुःखसागरहरोऽद्भुतमेतत् ॥ ६ ॥

स्फुरद्दर्पकन्दर्पदर्पघ्नमूर्त्ति-
र्महीमण्डलीमण्डनीभूतकीर्त्तिः ।
महादेवपादारविन्दानुरक्तो
महादेवनामा तदीयः सुतोऽभूत् ॥ ७ ॥

यदीयं गुणग्राममानन्दकन्दं
सहस्राननैरप्यशक्तः प्रवक्तुम् ।
धरालम्बदम्भेन पातालमूले
भुजङ्गाधिपो लज्जया निर्ममज्ज ॥ ८ ॥

धरित्री पवित्रीकृता यच्चरित्रै-
र्दिशां वृन्दमाशोभितं यद्यशोभिः ।
यदीयप्रतापप्रतप्तः पतङ्गः
पयोधिं बत प्रत्यहं मङ्क्तुमेति ॥ ९ ॥

करान्दोलनप्रस्खलत्कङ्कणाली-
झणत्कारजाग्रत्स्मरभ्राजिनीभिः ।
स्फुरच्चामरैर्वीजितः सुन्दरीभिः
सदा शोभयामास सिंहासनं यः ॥ १० ॥

नमन्मेदिनीकान्तकोटीरकोटि-
स्फुरद्रत्नभादीपनीराजिताङ्घ्रिः ।
धरादेवदारिद्र्यविद्रावणो यः
प्रतीपक्षितीशानशेषानजैषीत् ॥ ११ ॥

महादेवपादारविन्दप्रसादे
तुरङ्गद्विपेन्द्रादिसेनाप्रकर्षे ।
परप्रेयसीवर्जने सत्यवादे
प्रजापालने तादृशः कोऽपि नाभूत् ॥ १२ ॥

एतस्य क्षितिपालधोरणिमणेरालोक्य भक्तिं परां
कैलासाचलसाम्यमस्य च गिरेः सम्पूर्णमापादितुम् ।
देवः शैलसुताविनायकगणैः सार्द्धं मयूराचले
नित्यं वस्तुमुपाययौ स भगवान्गोकर्णपल्लीश्वरः ॥ १३ ॥

श्रीमान्मयूरगिरिमूर्द्धनि निर्विरामं
कृत्वा शिवालयमतीव मनोभिरामम् ।
तस्मिन्विधाय विधिवच्च शिवप्रतिष्ठां
तुष्टाव भक्तिभरकण्टकिताङ्गयष्टिः ॥ १४ ॥

निस्सङ्गोऽपि नगाधिराजतनयादेहार्द्धधारी सदा
निश्चेष्टोऽपि चराचरं विरचयन्निस्स्वोऽपि विश्वम्भरः ।
निष्कामोऽपि समस्तकामनिलयः शान्तोऽपि विश्वान्तकः
सर्वेशोऽपि दिगम्बरो विजयते चन्द्रार्द्धचूडामणिः ॥ १५ ॥

कालान्तकाय कलिकल्मषनाशनाय
ब्रह्मादिदेवनुतपादसरोरुहाय ।
विश्वेश्वराय भवसागरतारकाय
भूघ्राण(?)मध्यनिलयाय नमः शिवाय ॥ १६ ॥

हिमकरखण्डकिरीटं सुरतरङ्गिणीमिलज्जटाजूटम् ।
वामाङ्गीभवदबलं वन्देऽहं तं परं ब्रह्म ॥ १७ ॥

उन्मीलन्नवयौवनाः सुनयनाः सानन्दमालिङ्गिताः
सर्वे स्वादुकषायतिक्तमधुरप्रायाश्च भुक्ता रसाः ।
नानागीतविनोदवाद्यविभवैः कालः कियान् हापितः
चेतः क्वापि न हि प्रसन्नमधुना विश्राम्यति श्रीशिवे ॥ १८ ॥

भवसागरस्य परमं तरणं करणं सुखस्य विपदां हरणम् ।
वरणं विमुक्तिसुदृशः शरणं चरणं हरस्य करवाणि चिरम्॥१९॥

मानसे मुनिजनेन गोपितं द्वीपिचर्मपरिधानशोभितम् ।
योगिनीमधुरगीतिमोदितं सन्ततं नमत नीललोहितम् ॥ २० ॥

शम्भवाय च मयोभवाय ते शङ्कराय च मयस्कराय ते ।
श्रीशिवाय सकलार्थदाय ते सर्वदा शिवतराय ते नमः ॥२१॥

नमनीयपदाम्बुजं सुरैः कमनीयं हिमशैलकन्यया ।
भजनीयमनन्यचेतसा मननीयं मुनिभिः शिवं भजे ॥ २२ ॥

अपि स्नानान्नानाविधतनुभृतां यत्रिपथगा
विधत्ते कैवल्यं करकमललीलामलकवत् ।
प्रवाहैस्तत्सङ्ख्यैस्त्रिभुवनमिदं पावयति य-
त्प्रभावः सोऽयं श्रीशिव तव जटासंश्रयभवः ॥ २३ ॥

बाले लीलाविलासैरलमलिकुल ते मञ्जुगुञ्जारवैः किं
किं वा कोलाहलैस्ते पिककुल विकलैः केकिनः किं निनादैः ।
रे रे कन्दर्प दर्पं परिहर भवतां सङ्गखेदादिदानीं
सानन्दं मानसं मे पुरहरचरणाम्भोरुहध्यानमग्नम् ॥ २४ ॥

कर्णोत्तंसभुजङ्गमस्तकमणिस्फूर्जत्कपोलस्थलं
कल्याणैकनिदानमाननजितप्रोत्फुल्लपङ्केरुहम् ।
खेलद्बालकबाहुलेयललितक्रीडाभिरानन्दितं
साम्बं धाम किशोरचन्द्रकलिकाचूडालमीडामहे ॥ २५ ॥

मुनिमानसहंसाय संसारभयहारिणे ।
सुरवंशावतंसाय साम्बाय महसे नमः ॥ २६ ॥

आनन्दसन्दोहगलन्मरन्दे
कालीचलापाङ्गमिलन्मिलिन्दे ।
सानन्दवृन्दारकवृन्दवन्द्ये
वन्दे महादेवपदारविन्दे ॥ २७ ॥

हुङ्कारमात्रदलितान्तककिङ्कराणां
संसारसागरसमुत्तरणोन्मुखानाम् ।
येषां गृहेषु कुलदैवतमिन्दुमौलि-
स्तेभ्यो नमस्कृतिरियं नरपुङ्गवेभ्यः ॥ २८ ॥

कात्यायनीकेलिविलासलोलं
समुल्लसत्कुञ्जरचर्मचोलम् ।
वक्षस्थलव्यालफणावचूलं
चेतश्चिरं चिन्तय चन्द्रचूडम् ॥ २९ ॥

सत्यं विज्ञानमानन्दमुदासीनमनञ्जनम् ।
शिवः शर्म जगद्धर्मब्रह्म शर्म तनोतु नः ॥ ३० ॥

तातः शिवो मे जननी भवानी
धात्री च गङ्गा दुरवापसङ्गा ।
भ्राता गणेशो भगिनी च विद्या
गणाः सखायः सुकृतं सहायः ॥ ३१ ॥

शिवो दयालुः शिवमाश्रयेऽहं
शिवेन धन्योऽस्मि नमः शिवाय ।
शिवात्परं नास्ति शिवस्य विश्वं
शिवेऽस्तु चेतः शिव मे प्रसीद ॥ ३२ ॥

इति स्तुवानाय नृपाय देवः
सन्दर्शयामास निजस्वरूपम् ।
वरं वृणीष्वेति वदन्तमूचे
ततो महादेवमहीमहेन्द्रः ॥ ३३ ॥

प्रसिद्धं नामास्तु स्मरहर मयूरेश इति ते
सदा ते सान्निध्यं भवतु भगवन्नत्र च गिरौ ।
अमुष्मिंस्त्वद्रूपे भवति भजनं यस्य लभता-
मसौ सर्वान्कामान्परममवसाने तव पदम् ॥ ३४ ॥

विजेता वीराणां विमलकुलवल्लीकलयिता
प्रसादात्ते शम्भो भवतु गुरुकीर्त्तिर्मम सुतः ।
मयूराद्रौ राज्यं मम कुलभुवां च क्षितिभुजां
निरातङ्कं भूयात्सुकृतमयमाचन्द्रतपनम् ॥ ३५ ॥

वरं प्रतिश्रुत्य तथेति तस्मै तिरोदधे बालमृगाङ्कमौलिः ।
भूयोऽपि भूदेववितीर्णवित्तः श्रीमेदुरं मन्दिरमाजगाम ॥३६॥

सम्यक् पालयतः प्रजाः प्रतिमहीपालानपाकुर्वतः
कीर्तिं दिक्षु वितन्वतोऽस्य जगतीपालस्य काले शुभे ।
नाम्ना मानवती प्रिया गुणवती प्रासूत सूनुं सती
कौसल्येव दिनेशवंशतिलकं रामं रमामन्दिरम् ॥ ३७ ॥

शत्रूनेष विजेष्यते क्षितिभुजां राष्ट्राणि चादास्यते
पूर्वेषां च यशो हिरण्मयतुलादानादिभिर्धास्यते ।
दारिद्र्यं प्रहरिष्यते च विदुषां सम्यक् प्रजास्त्रास्यते
बालोऽसाविति वीक्ष्य जन्मसमयं ज्योतिर्विदः प्रोचिरे ॥३८॥

भविता समरेषु भैरवोऽसावुपलब्धोऽपि च भैरवप्रसादात् ।
इति चारु विचार्य कार्यमार्यस्तनयं भैरवनामकं चकार ॥३९॥

पितॄणामानृण्यं गतवति महादेवनृपतौ
ददाने विप्रेभ्यः कनकमिह पुत्रोत्सवविधौ ।
हरेर्नाभौ लीनं बत कनकगर्भेण विधिना
सुरैर्भीतं हेमाचलवसतिभङ्गोदयधिया ॥ ४० ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नयमात्मजोत्सवविधिः सर्गोऽगमत्पञ्चमः ॥ ४१ ॥

॥ इति श्रीमदखिलभूपालमौलिमाणिक्यमालामरीचिवीचिसमर्चितचरणसरोज-
मयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये भैरवसेनोत्पत्तिर्नाम पञ्चमः सर्गः ॥

---

## षष्ठस्सर्गः ।

जनमानसरञ्जनप्रवीणः पृथिवीनायकधोरणीधुरीणः ।
वसुधामथ शास्त्रशस्त्रविद्याचतुरो भैरवभूपतिः शशास ॥ १ ॥
यदसाववसन्मयूरशैले नयरीत्या न विपक्षभूपभीत्या ।
न हि हिंस्रभिया मृगाधिराजो गिरिराजस्य दरीं बरीभरीति ॥२॥
गुणिनं तमवाप्य भूमिपालं प्रकृतीनामथ मण्डलं विरेजे ।
स्फुरदुज्ज्वलधाम मध्यरत्नं परमोच्चैरिव हारमौक्तिकानि(नाम्) ॥३॥
दिननायकवंशमौलिरत्ने धरणीं शासति भैरवेऽसपत्ने ।
निजधर्ममवर्णयन्त वर्णा नयविद्याविनयादिकोपपन्नाः ॥ ४ ॥
सकलानपहाय भूमिपालान्निजमौलेरुपरि प्रतिष्ठमाने ।
स चकार परं सितातपत्रे क्षितिजम्भारिरखण्डहेमदण्डम् ॥ ५ ॥
अपि दैवलिपेः प्रतिश्रुतादप्यधिकं यच्छति सर्वयाचकेभ्यः ।
रमणीयसुवर्णशृङ्खलाभूत्परमं भैरवभूपपाणिपद्मे ॥ ६ ॥
कलधौतभरेण भूमिदेवप्रमुखाष्टादशजातयो विनम्राः ।
विहिता इति तस्य दण्डनीतिः श्रवणायैव न तु प्रयोजनाय ॥७॥
जनताघनतापहारिणोऽस्य क्षितिपालस्य गुणौघकीर्त्तनेन ।
गुरुहर्षजुषां परं प्रजानां नयनालीषु बभूव बाष्पपाली ॥ ८ ॥

रिपुकालसुलेमशाहभूमीपतिभीत्या चतुरङ्गसैन्ययुक्तः ।
अथ मण्डपपर्वताधिनाथः शरणं भैरवभूपमाजगाम ॥ ९ ॥
स विजित्य सुलेमशाहवीरं रणधीरं निजदोर्बलप्रतापैः ।
चिरमाश्रयमाश्रितानुरक्तः प्रददौ मण्डपपर्वतेश्वराय ॥ १० ॥
परिपालयति प्रजाः क्षितीशे निजवंशोचितधर्मसम्भ्रमेण ।
अथ गुर्ज्जरदेशपात्रिशाहः शमनीयां ककुभं ग्रहीतुमागात् ॥ ११ ॥
मदगन्धिसहस्रवारणानामपि लक्षद्वयवाजिनामधीशः ।
सुलतानबहादुरः सहायं विनयाद्भैरवराजमाजुहाव ॥ १२ ॥
सकलप्रकृतिप्रधानमुख्यान्गुरुमाहूय च भैरवक्षितीन्द्रः ।
किमु नाम विधीयतामिदानीमिति पप्रच्छ विचार्य कार्यकारी ॥१३॥
अधिगत्य सभासदां विचारं सचिवेन स्थविरेण सम्बभाषे ।
सकलं भवता न बुध्यते किं तदपीयं गुरुगौरवाय पृच्छा ॥ १४ ॥
असुभिर्वसुभिश्च पालनीया कमनीया नवकीर्त्तिरेव भूपैः ।
भवताऽस्य सहायकर्म तस्मादिदमङ्गीक्रियतामिदं मतन्नः ॥ १५ ॥
इति वाचमवाप्य तस्य राजा धुरमुर्व्याः सचिवेषु सन्निधाय ।
चतुरङ्गबलान्वितस्तुरङ्गं सितमारुह्य बहादुरं प्रतस्थे ॥ १६ ॥
तमुपागतमादरान्नरेन्द्रं त्वरितो हर्षभरेण गुर्ज्जरेशः ।
अशनैर्वसनैर्गजैस्तुरङ्गैर्मणिहेमाभरणैरुपाचचार ॥ १७ ॥
अथ भैरवभूपतिं रतीशद्युतिमासाद्य बहादुरः सहायम् ।
अभिरामनिजामशाहलक्ष्मीकमलाक्षीकरपीडनोद्यतोऽभूत् ॥१८॥
अमुना विभुना विरोचमानं बलमादाय चतुर्विधं विशालम् ।
त्वरया परया स गुर्ज्जराणामधिपो देवगिरिं जगाम जेतुम् ॥१९॥
विजयाय समागतं निशम्य प्रतिभूपालबलं निजामशाहः ।
अथ देवगिरेः स्ववाहिनीभिः सममुत्तीर्य समाजगाम योद्धुम् ॥२०॥
यवनाधिपतिर्विलोक्य सेनां परमेनां प्रतिभूपतेर्बिभाय ।
किमु वन्यगजा भवन्ति शूरा मृगराजे गहनं विगाहमाने ॥२१॥
समरस्तुमुलो भयङ्करोऽभूदुभयोः सङ्गतसेनयोस्तदानीम् ।
कलहो दिवि देवसुन्दरीणामपि वीरप्रवरान्वरीतुमासीत् ॥ २२ ॥

सिंहनादमभिनीय दुःश्रवं खड्गभीषणभुजो महारथः ।
दक्षिणक्षितिपतेः पताकिनीमाविवेश रणधीरभैरवः ॥ २३ ॥
प्रतीपवीरे क्षितिपालसैन्ये सम्प्राप्तदैन्ये करवालपाणिः ।
श्रीभैरवेन्द्रो विचचार वीरो नेता तरूणामिव दाववह्निः ॥ २४ ॥
अथ कोऽपि भटश्चकार कोपात्करवालव्रणमस्य भालभागे ।
स तु तं विनिहत्य तूर्णमेव क्षितिपालो निजसैन्यमध्यमागात् ॥२५॥
अमुष्य भालस्रवदस्रधारामाराढुपेतो रणदुर्मदस्य ।
ससम्भ्रमं गुर्ज्जरभूमिपालः स्वपाणिनैव प्रणयान्ममार्ज ॥ २६ ॥
अथ क्रुधा गुर्ज्जरमेदिनीपतिः स्वयं समागत्य सवीरभैरवः ।
बलेन निर्जित्य विपक्षभूपतिं क्षणादसौ देवगिरिं गृहीतवान् ॥२७॥
सुलतानबहादुरस्तदानीं सबलो देवगिरेरुपर्युपेत्य ।
अचिराय विपक्षवीरभूमीपतिलक्ष्मीं चिरसञ्चितामलुण्ठत् ॥२८॥
सेनापतिं तत्र निधाय शैले धुरन्धरो गुर्ज्जरपात्रिशाहः ।
सहामुना भैरवपार्थिवेन समागतो देवगिरेरधस्तात् ॥ २९ ॥
त्वद्भुजो विजयभाण्डगृहं तच्चित्रकूटमपि देहि गृहीत्वा ।
इत्ययाचत तुरुष्कनरेन्द्रो भैरवाय रणभीमरवाय ॥ ३० ॥
किमतः परमस्ति नाम भाग्यं यदसौ गुर्ज्जरमेदिनीमहेन्द्रः ।
कुरुते मयि पाणिबन्धमुच्चैरिति मत्वा तदुरीचकार राजा ॥ ३१ ॥
विपक्षपक्षक्षयदक्षमेनं सपक्षमासाद्य नरेन्द्रसिंहम् ।
बहादुरः क्षोणिपतिः ससैन्यो द्राक् चित्रकूटाभिमुखः प्रतस्थे ॥३२॥
सभैरवं गुर्ज्जरभूमिपालमायातमाकर्ण्य विचार्य सन्धिम् ।
स चित्रकूटाधिपतिर्विनम्रो ददावुभाभ्यामपि भूरिदण्डम् ॥ ३३ ॥
सेनामुपादाय नितान्तगुर्वीमथो हुमाऊमुगिलाधिराजः ।
तत्रागतामस्य निशम्य धाटीमुपागतः कोपविलोहिताक्षः ॥ ३४ ॥
स यावदायाति पुरो विरोधी दिल्लीपतिस्तावदसौ पुरस्तात् ।
उपागमद्भैरवभूमिपालः स्तम्बेरमस्येव मृगाधिराजः ॥ ३५ ॥
तत्र पश्यति बहादुरभूपे विस्मयोत्थिततनूरुहकूपे ।
भीमसेननिभभैरवदिल्लीपालयोरतितरां समरोऽभूत् ॥ ३६ ॥

भैरवे समरसीम्नि जिगीषौ सिंहनादबधिरीकृतविश्वे ।
कौतुकादुपगतैरथ देवैराकुलं गगनमण्डलमासीत् ॥ ३७ ॥

सगौरवा भैरवपाणिसङ्गा रिपूत्तमाङ्गैः कृतदोहदश्रीः ।
तत्खड्गधारा रणभूम्यरिष्टे कीर्त्तिप्रतापौ यमलावसूत ॥ ३८ ॥

द्विषद्गणे सङ्गरजातभङ्गे समीपमागत्य बहादुरेन्द्रः ।
आलिङ्ग्य चैनं जयिनं भुजाभ्यामानन्दमाविन्दत भूरिमानम्॥३९॥

वाजिवारणहिरण्यदुकूलस्वीयवीरकरकङ्कणमुख्यम् ।
पारितोषिकमनेकममुष्मै गुर्ज्जरक्षितिपतिर्वितताार ॥ ४० ॥

सङ्ग्रामविद्रावितधीरवीरं मित्रं पुरस्कृत्य नृपालमेनम् ।
सम्प्राप्तकीर्त्तिः स्पृहणीयमूर्त्तिर्ययौ तदानीं निजराजधानीम्॥४१॥

छत्रचामरतुरङ्गगजादिस्फारवस्तुनिवहैः परितोष्य ।
आदिदेश किल गुर्ज्जरभूपस्तं मयूरगिरये विनयेन ॥ ४२ ॥

मयूरगिरिनागरीनयनधोरणीलालस-
त्सरोरुहसतोरणीकृतनिशान्तवातायनम् ।
प्रविश्य पुरमुज्ज्वलप्रथितकीर्त्तिपूरः प्रजाः
स बागुलपुरन्दरः पुनरमन्दमानन्दयत् ॥ ४३ ॥

राष्ट्रौढक्षितिपालभालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये भैरवभूमिपालविजयस्सर्गस्तु षष्ठोऽगमत् ॥ ४४ ॥

॥ इति श्रीमदखिलभूपालमौलिशालिमाणिक्यमालामरीचिवीचिसमर्चितचरण-
सरोजमयूरगिरिकेसरिश्रीमहाराजाधिराजनारायणशाहोद्योजितदाक्षिणा-
त्यरुद्रकवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये भैरवसेनविजयो
नाम षष्ठस्सर्गः ॥

---

## सप्तमस्सर्गः ।

अथ कोऽपि बुधोऽनवद्यविद्यारमणीयो गरुडोपनामधारी ।
कलिकर्णममुं निशम्य काशीनगराद्भैरवराजमाजगाम ॥ १ ॥
तमुपागतमादरातिरेकादथ दौवारिकवेदितो विधिज्ञः ।
स्फुरदर्घ्यसुवर्णपात्रपाणिः क्षितिपालोऽभिजगाम जातहर्षः ॥ २ ॥
उचितोच्चतराभिरर्चनाभिः प्रमदोत्फुल्लविलोचनो नरेन्द्रः ।
मणिकाञ्चनविष्टरे निविष्टं परमानर्च मनीषिणां वरिष्ठम् ॥ ३ ॥
विहिताखिलसाङ्गसार्थवेदः परमातिथ्यविनीतमार्गखेदः ।
विहिताञ्जलिना स भूमिदेवो जगदे भैरवभूभुजा तदेदम् ॥ ४ ॥
अपि पण्डितरत्नपावनी सा रजनीजानिकिरीटराजधानी ।
कुशला वरिवर्त्ति यत्प्रसादात्पदवी नैव दवीयसी पुरारेः ॥ ५ ॥
भवतश्चरणारविन्दपूजां कुरुतामेष मनोरथेन केन ।
अथवाऽत्र भवत्समागमोऽयं मम पूर्वार्जितपुण्यपाकहेतुः ॥ ६ ॥
इति तस्य निशम्य गामुदारामनुकूलां मुदितो जगाद विद्वान् ।
विनयार्णव भूपते तवास्मादवलोकादपरो मनोरथः कः ॥ ७ ॥
जगतीवलये नृपो भवादृङ्ग्विशुद्धः क्वचिदीक्षितश्श्रुतो वा ।
भवतः प्रतिगृह्य हेम तस्मादिह सोमेन नृसोम यष्टुमीहे ॥ ८ ॥
इतिवाचममुष्य पण्डितस्य स्फुटमाकर्ण्य महीपतिः प्रसन्नः ।
उपनीय सुवर्णटङ्कभारान्कनकस्थानमचीकरद्द्विजस्य ॥ ९ ॥
गरुडाय सुवर्णदानमेतत्किमपूर्वं भवतीति सम्प्रधार्य ।
पुनरश्वरसादनर्घ्यरत्नप्रकरं चापि तुरङ्गमानदासीत् ॥ १० ॥
शिखिभूधरवासिनो जनस्य स्तवनीयौ नितरामुभावभूताम् ।
अधिकाधिगमे गतस्पृहोऽर्थी क्षितिपालोऽपि बलेन भूरिदायी ॥ ११
गरुडोऽथ तथा चकार यागं सकल[illegible] दिवौकसो हविर्भिः ।
अनिवारितमन्नहेमदानैः क्षितिदेवा उ[illegible]गभूरितृप्तिमीयुः ॥ १२ ॥
तमथाऽवभृथे कृताभिषेकं द्विजमाकर्ण्य शरीरमात्रशेषम् ।
मुदितो नृपतिः प्रसह्य तस्मै किल लक्षालयखेटकं व्यतार्षीत् ॥ १३ ॥

स कदाचिदहर्निशं ददानः कमनीयं मतिमास्तिकीं दधानः ।
सहितः पृतनाभिराशु गोदामतिमोदाकुलमानसः प्रतस्थे ॥ १४॥
स महीमघवा विधाय गङ्गा(गोदा)पयसि स्नानविधिं विधिप्रवीणः ।
अथ तन्निकटे ददर्श लिङ्गं किमपि त्र्यम्बकनामधेयमेकम् ॥ १५ ॥
मणिकाञ्चनमालिगोसहस्रद्विपजात्यश्वसुवर्णरत्नवर्षैः ।
जनजीवनदो महीमहेन्द्रः सकलानां परिपूरणं वितेने ॥ १६ ॥
स समेत्य निफालखेटमस्मिन्भटमुत्पाट्य विपक्षभूमिभर्तुः ।
चिरसञ्चितसम्पदं तुरङ्गान्मदमत्तान्दश सिन्धुरानलुण्ठत् ॥ १७॥
अधिरुह्य च सप्तशृङ्गशैलं बहुजन्मार्जितपुण्यपूरपाकैः ।
अथ तत्र ददर्श दृष्टिसृष्टेः फलमष्टादशबाहुमादिदेवीम् ॥ १८ ॥
अधिगत्य जगत्त्रयैकमातुश्चरणाम्भोजरजःकणप्रसादम् ।
अथ हस्तगिरिं ग्रहीतुकामस्तरसा भैरवभूपतिः प्रतस्थे ॥ १९ ॥
रथतुङ्गतुरङ्गनागपत्तिप्रकरैर्भूपतिराततज्यधन्वा ।
परितो निरुरोध हस्तशैलं किरणैर्मेरुमिव प्रचण्डधामा ॥ २० ॥
समरं तुमुलं वितन्वतोऽस्य क्षितिपालस्य निजामवीरवर्गैः ।
इह हस्तमहीधरावरोधे बत षण्मासमितो जगाम कालः ॥ २१ ॥
स कदाचिदतीव जातकोपः शिखरिद्वारि समं बलेन लग्नः ।
प्रसभं मदमत्तदन्तिदन्तस्फुटघातैरुदपाटयत्कपाटम् ॥ २२ ॥
विनिहत्य बली सपत्नभूमीरमणप्राणसमानमेकवीरम् ।
उररीकुरुते स हस्तशैलं विजयी भैरवसिंहसार्वभौमः ॥ २३ ॥
अथ हस्तगिरौ सवाहिनीकं निजमेकं विनिधाय वीरमुख्यम् ।
अपरं किल गालनाख्यशैलं जयशीलः स बली नृपश्चचाल ॥ २४॥
पृथिवीपतिरद्भुतप्रतापः सह सैन्येन ललाग तत्र दुर्गे ।
अथ दुर्गपतिः समेतसेनः समरं कर्त्तुमुपाजगाम घोरम् ॥ २५ ॥
अधिदुर्गकपाटमब्दमात्रं समरः सङ्गतसेनयोस्तदासीत् ।
इदमव्यभिचारि सर्वदा यत्परिरेभे नृपभैरवं जयश्रीः ॥ २६ ॥
स निहत्य बलेन दुर्गपालं परमालम्बितपौरुषो यशस्वी ।
रिपुदुर्गमलाङ्गलाख्यदुर्गं घनलक्ष्मीपरिपूर्णमेव लेभे ॥ २७ ॥

विनियुज्य तदीयरक्षणार्थं निजसेनापतिमेकमेकवीरः ।
स्पृहणीययशाः स्वराजधानीमभिमानी धरणीपतिर्विवेश ॥ २८ ॥

श्रीरामं परिपूजयन्ननुदिनं सम्भावयन्भूसुरा-
न्दुर्गाण्याकलयन्नरीन्विदलयन्सम्यक् प्रजाः पालयन् ।
सत्कीर्त्या भुवनत्रयं धवलयन्कुर्वन्प्रतापोदयं
सार्द्धं मन्त्रिजनेन भैरवनृपो राज्यं चिरं भुक्तवान् ॥ २९ ॥

श्रीभैरवक्षोणिपतेरुदाराः सप्ताभवन्कामसमाः कुमाराः ।
तेषां वरीयानथ जेयदर्णस्तस्यानुजोऽभून्नृपवीरसेनः ॥ ३० ॥

तस्यानुजन्माऽजनि नेमदेवस्तस्मादनु क्ष्मापतिलक्ष्मधाम ।
नारायणो नाम गुणार्णवोऽभून्नारायणाराधनसावधानः ॥ ३१ ॥

तस्यानुजोऽजायत ह्मांउदेवस्तस्यानुजन्माऽजनि लक्षधीरः ।
श्रीलक्षधीरस्य किलानुजन्मा सन्मानधामाऽभवदम्बदेवः ॥ ३२ ॥

ततः परं भैरवभूपसिंहे पुरन्दरार्द्धासनशोभमाने ।
श्रीवीरसेनः शमितारिसेनो नरेन्द्रसिंहासनमाससाद ॥ ३३ ॥

आनन्दिताशेषजनो वदान्यो यशोभिराशोभितदिक्कदम्बः ।
प्रौढप्रतापः सह मन्त्रिवर्गैः स नीतिरीत्यैव महीं शशास ॥ ३४ ॥

अत्रान्तरे गुर्ज्जरदेशवल्लवव्यारारव्यदुर्गं चतुरङ्गसङ्गिनी ।
प्रचण्डदोर्दण्डपठाणहापसीप्रतीपभूपालचमूः समाययौ ॥ ३५ ॥

इमां समाकर्ण्य विपक्षवाहिनीमुद्वेलकल्लोलपयोधिभीषणाम् ।
यशोधनो वीरमशाहभूपतिर्नितान्तचिन्ताकुलमानसोऽभवत् ॥ ३६

महारथं मध्यमपाण्डवोपमं विमृश्य नारायणमात्मबान्धवम् ।
आकार्य सङ्ग्रामकृतां धुरन्धरं सगौरवं वाचमुवाच वीरमः ॥ ३७ ॥

समागताः सम्प्रतिभूरिवैरिणो व्यारारव्यदुर्गे विजिगीषवः श्रुतम् ।
राज्यं तवैवेदमतस्त्वया सखे यदत्र युक्तं त्वरितं विधीयताम् ॥ ३८ ॥

इति ब्रुवाणे रमणीयमग्रजे तदैव नारायणमेदिनीपतेः ।
रणे जयश्रीकरपीडनोत्सुकः पुनः पुनर्दक्षिणबाहुरस्फुरत् ॥ ३९ ॥

ततः परं वीरमशाहभूपतिर्दिदेश साङ्ग्रामिकवस्तुसङ्ग्रहम् ।
[illegible]ंसि मातङ्गतुरङ्गमानपि प्रीताय नारायणवीरमौलये ॥ ४० ॥

तदा मुदा भैरवतुर्यनन्दने तुरङ्गमुच्चैःश्रवसः सहोदरम् ।
जवादलङ्कुर्वति शत्रुविक्रमे महानभूत्सङ्गरतूर्यनिस्वनः ॥ ४१ ॥
करालसाङ्ग्रामिकवेषभूषितः प्रवीणवैतालिकगीतविक्रमः ।
प्रतीपभूपालकरीन्द्रकेसरी नारायणक्ष्मापतिरभ्यषेणयत् ॥ ४२ ॥
नृपेण ताम्बूलमुखी विभूषिता मनोहरा श्वेतदुकूलधारिणी ।
विलोकिता वारविलासिनी पुरः साक्षाज्जयश्रीरिव वीरगामिनी ॥४३॥
सर्वत्र नारायणशाहभूपतेः सति प्रतापे किमनेन साम्प्रतम् ।
इतीव धूलीपटलैः खुरोद्धतैस्तुरङ्गमास्तस्य दिवाकरं प्यधुः ॥ ४४ ॥
अथ स्फुरत्केतनचञ्चलाञ्चलैर्गजोपरिस्थैः परितर्जयन्निव ।
स शाहनारायणसैन्यवारिधिर्व्यलोकि दूरादरिभिर्भयाकुलैः॥४५॥
ततः परं सङ्गतयोस्तयोर्द्वयोः कृपाणबाणप्रमुखाखिलायुधैः ।
सविस्मयप्रेक्षकरोमहर्षणः प्रकाममासीत्तुमुलो महारणः ॥ ४६ ॥
अत्रान्तरे भैरवराजनन्दनो वीरश्रियालिङ्गितचारुविग्रहः ।
चण्डाट्टनादः करवालमावहन्वीरः स्वयं योद्धुमगादरातिभिः॥४७॥
महीपतिः संयति भूमिदेवतामर्कांशुभास्वत्करवालखण्डितैः ।
विजेतुकामः क्षितिपालमौलिभिः स नालिकेरैरिव पर्यपूजयत् ॥४८॥
श्रीशाहनारायणकीर्त्तिगङ्गया द्विषद्गुणाकीर्त्तिकलिन्दकन्यया ।
सा शोणितापूरसरस्वतीमती बभौ त्रिवेणीव तदा रणक्षितिः ॥४९॥
शुण्डाः प्रचण्डा मदमत्तदन्तिनामत्रोटयद्भैरवसिंहशावकः ।
प्रचण्डदन्तावलदन्तघट्टनादथास्य खड्गः शतखण्डितोऽभवत् ॥ ५० ॥
ततः समादाय करालमुद्गरं स सत्वरं सङ्गरचत्वरं गतः ।
कठोरकण्ठीरवनादभीषणः श्रीभीमसेनस्य तुलामगाहत ॥ ५१ ॥
स मुद्गरेण प्रतिपन्थिदन्तिनां प्रचण्डशुण्डारदनानचूर्णयत् ।
तथा रिपूणामपि हन्त पातितैः कलेवरैर्भूतगणानतीतृपत् ॥ ५२ ॥
भूपालसिंहो रणकानने बलादास्फोट्य भद्रद्विपकुम्भमण्डलम् ।
समन्ततः पर्यकिरत्स्फुरद्यशो विशोभिमुक्ताफलजालमुज्ज्वलम् ॥५३॥
द्विषां तुरङ्गद्विरदादिसम्पदो न केवलं तेन भटेन लुण्ठिताः ।
दिगङ्गनाचन्दनलेपनायितं यशोऽपि तत्पूर्वपरंपरार्जितम् ॥ ५४ ॥

शेषेषु केचिद्दधिरे परेततां परेऽपलायन्त नितान्तकातराः ।
तृणानि दन्तेषु निधाय चेतरे नरेश्वरं ते शरणं प्रपेदिरे ॥ ५५ ॥
ततोऽगमद्भैरववंशभास्करः सहैव सैन्येन मयूरभूधरम् ।
अमुं जयश्रीपरिरम्भसुन्दरं सहोदरं वीक्ष्य ननन्द वीरमः ॥५६॥
कृतं कुलक्ष्मापतिकीर्त्तिरक्षणं त्वयाद्य वीरेत्यभिनन्द्य भूपतिः ।
दिदेश तस्मै मणिहेमभूषणस्फुरत्तुरङ्गादिकपारितोषिकम् ॥ ५७ ॥
ततः परं गुर्ज्जरदेशभूपतिः ससैनिकश्चिङ्गसखाननामकः ।
विजेतुकामः किल मीरपार्थिवं सहायमाकारयति स्म वीरमम् ॥५८॥
श्रीवीरसेनोऽपि यशोधनश्चमूमादाय नारायणबन्धुसंयुतः ।
समाययौ चिङ्गसखानपार्थिवं परोपकारो हि सतां कुलोचितः ॥५९॥
ततो मयूराचलसिंहयोस्तयोः सानाथ्यमासाद्य तुरुष्कपार्थिवः ।
सथालनेरे नगरे मनोहरे ततान ताम्राम्बरमन्दिरावलीम् ॥ ६० ॥
सहायमासाद्य चिराटभूपतिं टपालखानं गजवाजिसाधनम् ।
अभूदजय्यः किल मीरभूपतिः समीरणं प्राप्य यथा हुताशनः ॥६१॥
ततः परं चिङ्गसखानभूपतिर्विहाय तत्रैव समस्तसम्पदम् ।
श्रीवीरसेनक्षितिपाललम्बनाज्जगाम तत्रैव निशि स्वपत्तनम् ॥६२॥
अथ प्रभाते निजगुर्ज्जरेशयोर्भाण्डालयद्रव्यगजाश्वसैनिकान् ।
अभीः पुरस्कृत्य निजां पुरीमगाद्धनुर्द्धरो भैरवतुर्यनन्दनः ॥ ६३ ॥
सम्प्रेष्य तां गुर्ज्जरनाथसम्पदं नारायणक्षोणिपतिः कृपार्णवः ।
स्वसम्पदां क्षेमकरो महारथः स्वयं मयूराद्रिपुरीमुपागतः ॥ ६४ ॥
अकब्बरो गुर्ज्जरदेशराज्यं चिरात्समादाय गुरुप्रतापः ।
आकारयामास किलानुरागाद्विलोकितुं वीरमशाहभूपम् ॥ ६५ ॥
स प्रेमतः किञ्चिदुपायनीयमानीय सेनासहितः समेत्य ।
अकब्बरक्षोणिपतेः समीपे तस्थौ कियत्कालमथ क्षितीशः ॥६६॥

चिरं परमकब्बरावनिपुरन्दरादादरा-
दरातिकुलजित्वरादथ मनोरथं प्राप्य सः ।
प्रविश्य च पुरीमिमां सपदि वीरमोर्वीपति-
र्निरन्तरमरीरमन्मदनसुन्दरः सुन्दरीः ॥ ६७ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये भैरवनन्दनोत्सवविधिस्सर्गोऽगमत्सप्तमः ॥ ६८ ॥

इति श्रीमदखिलभूपालमौलिललाममालामरीचिवीचिचुम्बितचरणसरोज
महाराजश्रीनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये पुत्रोत्पत्तिर्नाम सप्तमस्सर्गः ॥

---

## अष्टमः सर्गः ।

दुर्गावती नाम ततोऽग्रपत्नी
सयौवना मन्मथराजधानी ।
चिरं निरस्ताखिलकार्यजातं
श्रीवीरसेनस्य मनो जहार ॥ १ ॥

दुर्गावती कामविमूढचेतः–
कान्ताय यद्यत्परमादिदेश ।
नृपोऽपि तस्मिन्गुणदोषचिन्ता-
मनाकलय्यैव चकार तत्तत् ॥ २ ॥

श्रीवीरसेनः प्रमदानिदेशं
विना प्रयातुं पदमप्यशक्तः ।
अन्तःपुरे वारविलासिनीनां
सङ्गीतनृत्योत्सवमाततान ॥ ३ ॥

ममापि जेता तनुशोभयैवा-
सावित्यसूयन्निव पञ्चबाणः ।
बलं समालम्ब्य विलासिनीनां
श्रीवीरसेनं सुतरां जिगाय ॥ ४ ॥

रजोगुणालिङ्गितमानसेन श्रीवीरसेनेन निषेव्यमाणः ।
स कामिनीनां निकरश्शरीरी शृङ्गारसम्भार इव व्यराजत् ॥५॥
उपास्यसेवां द्विजवर्गपूजां स्ववंशरीतिं नरपालनीतिम् ।
लोकापवादादपि नाम भीतिं न भूमिपालो गणयाञ्चकार ॥ ६ ॥
आद्यावसाने शनकैर्द्वितीयः क्षीणस्तुरीयस्य कथा तु दूरे ।
तृतीयमेव क्षितिनायकोऽसौ पुमर्थमङ्गीकुरुते स सङ्गी ॥ ७ ॥
स दर्शनं जातु जनैरलभ्यं यन्मन्त्रिणां गौरवतो दिदेश ।
वातायनालम्बिपदाम्बुजेन तत्केवलं कल्पितमल्पकालम् ॥ ८ ॥
निरन्तराराधितकामसेने तस्मिन्निजे भर्त्तरि वीरसेने ।
सा राज्यलक्ष्मीः कलुषीकृताङ्गा म्लानाऽभवत्खण्डितनायिकेव ॥ ९ ॥
नरो बली नीचबलं बबाधे पाटच्चरा स्पष्टचरा बभूवुः ।
न कोऽपि कस्यापि नतिं चकार स्वकामचारेण जना विचेरुः ॥१०॥
भृत्यास्तुरङ्गाश्च गजाः कृशाङ्गास्तदा मिताहारतया बभूवुः ।
नारायणो नश्शरणं स भूयाद्वेति किं भूरि तपांसि चक्रुः ॥११॥
दुर्गावती प्राह ततो नरेन्द्रं तदेति नारायणमात्मबन्धुम् ।
कलत्रपुत्रानुजमित्रयुक्तं मयूरदुर्गादवतारय द्राक् ॥ १२ ॥
नो चेदसौ सम्प्रति राज्यलक्ष्मीमिमां त्वदीयां गुणलोभनीयाम् ।
यथोचितोपायचतुष्टयेन शनैः शनैरेव वशे विधाता ॥ १३ ॥
अथाह राजा जलजायताक्षीं ग्रामैः कियद्भिस्तु मयैव दत्तैः ।
तुरङ्गमातङ्गबलादिहीनः कालं नयन्नेष करिष्यते किम् ॥ १४ ॥
दुर्गावती प्राह पुनर्नरेन्द्रं न वेत्सि लुब्धेङ्गितमङ्ग सम्यक् ।
स वेतनानां द्विगुणप्रदानाद्भवद्बलैरेव भवेद्बलीयान् ॥ १५ ॥
पिता तनूजं पितरं तनूजो निहन्तुमाकाङ्क्षति राज्यलोभात् ।
न चित्रमेतत्किल बन्धुवर्गे न राज्यलोभादपरोऽस्ति लोभः ॥१६॥
तस्मादिदं नैव नरेन्द्र कार्यं मुहूर्तमात्रं सहते विलम्बम् ।
अतः परं भूरि वचो निवार्य विधेयमेवोत्तममत्र कार्यम् ॥ १७ ॥
इत्थं समाकर्ण्य गिरं प्रियायास्तां चेतसा युक्तिमतीमवेत्य ।
सद्यस्ततो मन्त्रिसमूहमुख्यानाकारयामास महीमहेन्द्रः ॥ १८ ॥

एतानुपेतानखिलं निवेद्य प्रियोपदेशं नृपतिर्बभाषे ।
तद्ब्राह्मणं शार्ङ्गधराभिधानमाकार्य तूर्णं करणीयमेतत् ॥ १९ ॥
एवं निदेशं शिरसा गृहीत्वा महीपतेर्मन्त्रिगणः सहर्षः ।
आकार्य नारायणशाहवंश्यमहीसुरं शार्ङ्गधरं बभाण ॥ २० ॥
त्वया सपुत्रेण मयूरदुर्गाद्गन्तव्यमद्यैव विभोर्निदेशात् ।
त्वरान्वितः सम्प्रति तत्र गत्वा नारायणायेति निवेदयस्व ॥ २१ ॥
अथाऽवदच्छार्ङ्गधरो मनीषी नारायणक्षोणिपतेः प्रियायाः ।
स्वास्थ्यं सुतस्यापि भवेच्च यावत्तावन्निवासो नगरेऽत्र देयः॥२२॥
ततोऽब्रवीन्मन्त्रिगणः पुरेऽस्मिन्मुहूर्तवासेऽपि कृतं कथाभिः ।
प्रियाकुमारौ शिबिकाधिरूढौ कृत्वाऽऽशु दुर्गादवतारयैनम् ॥२३॥
भूयोऽवदच्छार्ङ्गधरो विषण्णः प्रभोर्निदेशादिदमस्तु किन्तु ।
समीपतो वद्दुदरीतिनामग्रामे निवासाय निदेशनीयम् ॥ २४ ॥
अथाहुरेते नृपतेर्निदेशान्मा सन्निधौ वद्दुदरीं श्रयन्तु ।
किन्तु स्वकीये सिडवाडनामग्रामे निवासाय विभोर्निदेशः॥२५॥
ततः परं शार्ङ्गधरेण सर्वं न्यवेदि नारायणपार्थिवाय ।
किंचित्प्रकोपेन नरेश्वरोऽपि प्रस्थानसम्भारमचीकरत्सः ॥ २६ ॥
श्रीशाहनारायणभूमिपालः कुटुम्बमादाय निजं समस्तम् ।
अशिश्रयत्तत्सिरवाडखेटं धर्मात्मजो द्वैतवनं यथैव ॥ २७ ॥
अत्रान्तरे पूर्वनृपाहृतानि स्वकीयदुर्गाणि च तानि तानि ।
रन्ध्रैषिणां भूमिभुजां ग्रहीतुमाशाङ्कुरश्चेतसि किञ्चिदासीत्॥२८॥
इत्थं निशम्यातितरां विषण्णास्ततः समग्रा अपि दुर्गपालाः ।
श्रीशाहनारायणभूमिपालं गुणैरुदारं शरणं प्रपन्नाः ॥ २९ ॥
महीमहेन्द्रोचितमादरेण प्रणाममाधाय विधेयदक्षाः ।
दुर्गाधिपाः प्राञ्जलयः शरण्यं श्रीशाहनारायणमित्थमूचुः ॥ ३० ॥
पुरातनक्षोणिभृता प्रमादादुपेक्ष्यमाणां कुलराज्यलक्ष्मीम् ।
आदाय दुर्गाण्यखिलानि राजन्नङ्गीकुरु त्वद्गुणसानुरागाम् ॥ ३१ ॥
अथाह नारायणभूमिपालो ममाग्रजन्मा स यथातथाऽस्तु ।
मया तु राज्यग्रहणादिदानीं भ्रातुः कथं दुःखमहो विधेयम् ॥३२॥

श्रीवीरसेनक्षितिपस्य किं च राज्यस्य भोक्ता तनयोऽपि नास्ति ।
इतः परं राज्यमिदं ममैव व्यर्थं ततो लौल्यमिदं पुरस्तात् ॥ ३३ ॥
इत्थं निशम्य क्षितिपस्य वाचं दुर्गाधिकारिप्रकरो जगाद ।
रन्ध्रैषिणो भूमिभुजः स्वराष्ट्रं ग्रहीतुकामा इति किंवदन्ती ॥ ३४ ॥
अतःपरं किं विधुरं पुरस्तान्महारथे त्वादृशि जागरूके ।
मनोरमा यत्कुलराज्यलक्ष्मीः प्रत्यर्थिपृथ्वीपतिगामिनी स्यात्॥३५॥
विनापराधेन मयूरशैलाद्बधूनिदेशादवतारितोऽसि ।
तज्जन्यखेदाभिभवो न कस्मादासीनमुत्थापयति द्रुतं त्वाम् ॥३६॥
तथापि चेदग्रजभूमिपालविषादसम्पादनतो बिभेषि ।
तुरङ्गमग्रामहिरण्यभूषारत्नादिदानैः परितोषयैनम् ॥ ३७ ॥
इत्थं समाकर्ण्य गिरं तदीयां राजा समं पञ्चदशाश्ववारैः ।
कलत्रपुत्रानुगतो ग्रहीतुं शालागिरिं प्रास्थित तूर्णमादौ ॥ ३८ ॥
सुवासिनीमूर्द्धनि पूर्णकुम्भं मालाकरीं माल्यकरामपश्यत् ।
गोपालबालां दधिपात्रहस्तां द्विजद्वयं वत्सवतीं च धेनुम् ॥ ३९ ॥
अथान्तिके बोपखलाभिधानग्रामे तुरङ्गांस्तनयोपनीतान् ।
ततः परं पाथिकवाख्यवाटादानीयमानं लभते स्म चार्थम् ॥ ४० ॥
इत्थं पुरस्तादवलोक्य राजा दैवोपनीतां शकुनावलीं ताम् ।
आनन्दपीयूषनिमग्नचित्तो राज्यं तदाऽमन्यत लब्धकल्पम् ॥४१॥
उत्कण्ठितो धीरसमीरलोलद्रुमावलीपल्लवपाणिकम्पैः ।
शालागिरिस्तुङ्गतुरङ्गरूढं समाजुहावेव नरेन्द्रमेनम् ॥ ४२ ॥
दिगन्तविश्रान्तविशालकीर्त्तिः प्रतापसन्तापितवैरिमूर्त्तिः ।
हिमाचलं सिंह इव क्षितीशः क्षणेन शालागिरिमध्यरोहत्॥४३॥
उपायनीकृत्य मनोरमाणि प्रभूतवस्तूनि च दुर्गपालाः ।
जनाश्च सर्वे जयशब्दपूर्वं नारायणं नाम नृपं प्रणेमुः ॥ ४४ ॥
पौरस्त्रियो वल्लभपुत्रवत्यस्ताम्बूलसम्पूर्णमुखाः प्रसन्नाः ।
श्रीशाहनारायणपार्थिवाय नीराजनां माङ्गलिकीं वितेनुः ॥ ४५ ॥
ततोऽभवन्मङ्गलतूर्यघोषः शक्रो यमाकर्ण्य समीपमेव ।
प्रतीपभूपागमनभ्रमेण द्वाराणि सद्यः पिदधे नगर्याः ॥ ४६ ॥

अदात्तदाऽसौ गिरिकोशजातं द्विजातिवर्गाधिपनिर्द्धनेभ्यः ।
घटेन सङ्ख्याय तथा हि मेघः सर्वत्रवर्षी न विशेषदर्शी ॥ ४७ ॥
महीधरो भूमिभुजा विरेजे महीधरेणापि महीमहेन्द्रः ।
पूर्वाचलो घर्ममरीचिनेव घर्मद्युतिः पूर्वमहीभृतेव ॥ ४८ ॥
पुरन्दरेणेव सुराः सरागाः सदाशिवेनेव गणाः सहर्षाः ।
श्रीशाहनारायणपार्थिवेन प्रजा ननन्दुः परिपूर्णकामाः ॥ ४९ ॥
अत्रान्तरे बोपखलाभिधानग्रामान्नरः कश्चिदुपेत्य तूर्णम् ।
नारायणो हन्त हयान्गृहीत्वा क्वापि प्रयातीति शशांस राज्ञे ॥ ५० ॥

श्रीनारायणनृपतेरशेषवृत्तं
विज्ञातुं निजमथ वीरमक्षितीशः ।
वीराग्र्यं बलयुतमेकलासखानं
साशङ्कः सपदि नियोजयाम्बभूव ॥ ५१ ॥
गच्छन्नसौ पथि ददर्श पुरः समेतं
श्रीनिम्बदीक्षित इति द्विजवर्यमेकम् ।
पप्रच्छ चेति भवता श्रुतमस्ति किञ्चि-
न्नारायणः क्व वरिवर्त्ति नरेन्द्रबन्धुः ॥ ५२ ॥

अथाग्रजन्मा वदति स्म वाचं
नारायणः सम्भृतसैन्यभारः ।
शालागिरौ स्वामितयास्ति सर्व-
सामन्तचूडामणिचुम्बिताङ्घ्रिः ॥ ५३ ॥

तत्त्वया बलवतोऽस्य मेदिनीवासवस्य निकटे न गम्यताम् ।
आगतस्य मृगराजसन्निधौ का गतिर्ननु मृगस्य भाविनी ॥ ५४ ॥

इत्थं निशम्य वचनं द्विजपुङ्गवस्य
प्रोद्भूतभीतिभरकम्पितगात्रयष्टिः ।
वीरो निवर्त्य समुपेत्य मयूरशैलं
राज्ञे समस्तमिदमाकलयाञ्चकार ॥ ५५ ॥

राजा तमाकर्ण्य गुरुप्रतापं कुर्वन् गजः सिंहमिवानुतापम् ।
स्वचित्तसिंहासनशोभमानकामास्पदे साध्वसमभ्यषिञ्चत् ॥ ५६ ॥

दुर्गावतीं प्रणयिनीमपि वीरसेन-
श्चण्डि स्फुटं त्वदुपदेशविपाक एषः ।
इत्थं निनिन्द निजमप्यबलाप्रधानं
बालाधिपो न खलु मङ्गलमाप कोऽपि ॥ ५७ ॥

जनता मुदिता मिथस्तदानीमवदद्भ्रातृपराभवो न पथ्यः ।
बत पश्य विभीषणाभिषङ्गाद्दशकण्ठः कथमापदं प्रपेदे ॥ ५८ ॥

स्वयमेव कृतो नृपेण बन्धुं परिभूय प्रसभं स्वराज्यभङ्गः ।
न हि सुप्तभुजङ्गमः प्रकोपं चरणास्कन्दनमन्तरा करोति ॥ ५९ ॥

श्रीमन्मयूरधरणीधरतस्तदानीं
पौराः स्वकीयहितदत्तदृशः समग्राः ।
शालाचलोदयगिरिप्रकटप्रतापं
नारायणाम्बरमणिं शरणं प्रपन्नाः ॥ ६० ॥

उपायमन्यं सकलं विचारय-
न्खगेश्वरे राजिलविक्रमायितम् ।
लुमायिजिं नाम सपत्नमातरं
धरापतिः सन्दिदिशेऽनुजं प्रति ॥ ६१ ॥

अहं जरामृत्युचमूपराजितो
न मे सुतो राज्यमिदं तवैतत् ।
इमां धुरन्नः परिवोढुमक्षमा-
न्नरेन्द्र नारायण पालयाधुना ॥ ६२ ॥

अथ सपदि समीपं प्राप्तवत्या जनन्या
निगदितमनवद्यं वाचिकं वैरसेनम् ।
मम हि परमधर्मः पालनं यद्गुरूणा-
मिति नरपतिहीरो नम्रमङ्गीचकार ॥ ६३ ॥

श्रीकृष्णदीक्षितगृहे स्फुरदग्निहोत्रे
सम्प्राप्य भोजनमयं परमप्रसादम् ।
नीत्वैकरात्रमपि तत्र मयूरदुर्गं
नारायणक्षितिपतिः किल गन्तुमैच्छत् ॥ ६४ ॥

श्रीमन्तं चतुरमुदारधीरवीरं
जेतारं सकलदिशां जयन्तकल्पम् ।
श्रीनारायणनृपतिः प्रतापशाहं
सानन्दं न्यदधि तदैव यौवराज्ये ॥ ६५ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये(ऽस्मिन्किल शालदुर्गविजयस्सर्गोऽगमच्चाष्टमः) ॥ ६६ ॥

॥ इति श्रीमदखिलभूपालमौलिललाममालामरीचिवीचिचुम्बितचरणसरोजमयू-
रगिरिकेसरिमहाराजश्रीनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये शालागिरिविजयो नाम अष्टमस्सर्गः ॥

---

## नवमस्सर्गः ।

प्रतापशाहाभिधमग्रसूनुं निवेश्य शालागिरिगोपनार्थम् ।
श्रीशाहनारायणसार्वभौमो मयूरशैलं प्रति गत्वरोऽभूत् ॥ १ ॥
दिशः प्रसन्नाः सहसा बभूवुर्ववौ समीरोप्यनुकूल एव ।
मृगास्तदा दक्षिणतो विचेरुः फलं विपक्वं तरवो वितेरुः ॥ २ ॥
मार्गे दधिक्षीरघृतादिपूर्णान्घटानतिस्वादुफलावलिं च ।
ताम्बूलपर्णक्रमुकप्रसन्नान्यादाय पौराः क्षितिपं प्रणेमुः ॥ ३ ॥
यान्तः सलीलं मदमुद्वहन्तः सम्प्राप्य नारायणशाहसेवाम् ।
घण्टारणत्काररवैर्मृगेन्द्रानाकारयामासुरिव द्विपेन्द्राः ॥ ४ ॥
अमन्दनिर्यन्मदवारिसान्द्राः सेनागजेन्द्राः पुरतः प्रचेलुः ।
विशालशालाचलमौलिचुम्बिस्त्रवत्पयोदा इव सेवमानाः ॥ ५ ॥
अवासवन्यद्विपगन्धवाहैर्धूताङ्कुशैः कोपकषायभावैः ।
मोघीकृताधोरणयत्नमीषे स्थातुं न वा गन्तुमपि द्विपेन्द्रैः ॥ ६ ॥

भूमण्डलीलङ्घनभूरिदर्पादुदक्षिपन्नग्रपदे तुरङ्गाः ।
गजान्गुरूनध्वनिरोधहेतूनुल्लङ्घ्य तानीषुरिव प्रयातुम् ॥ ७ ॥
श्रीशाहनारायणवाजिराजिप्रेङ्खत्खुराघातनिपीडिताङ्गी ।
वसुन्धरा स्यन्दननेमिधाराचीत्कारसीत्काररवं व्यधत्त ॥ ८ ॥
नारायणक्ष्मापतिसैन्यभारभुग्नो भुजङ्गाधिपतिः कथञ्चित् ।
स्फारीकृतोत्फालफणासहस्रस्तम्भेषु कम्पेन धरामभार्षीत् ॥ ९ ॥
इतस्ततो वर्त्मनि सङ्गतानां सङ्गेन सामन्तपताकिनीनाम् ।
नगापगानामिव देवगङ्गा पुरस्सरी संववृधेऽस्य सेना ॥ १० ॥
अनेकमातङ्गतुरङ्गसङ्गी परैरलङ्घ्यो निजकामचारी ।
कपिद्रुतादेकहयेभयोनेर्बभौ समुद्रादधिकं बलौघः ॥ ११ ॥
उत्तुङ्गमातङ्गधुरीणगामी सामन्तभूमीपतिचक्रवर्त्ती ।
मयूरशैलं रमणीयमारात्तमक्षिलक्षीकुरुते स्म वीरः ॥ १२ ॥
समीरलोलन्नगरीपताकाचेलाञ्चलव्याजकलापभारम् ।
यो वीक्ष्य नारायणमेघमारान्मदोदयात्ताण्डवयाञ्चकार ॥ १३ ॥
कृत्वा विहारं रजनीशशिभ्यां मुक्तानि मङ्क्तुं जलधौ गताभ्याम् ।
तल्पादिव द्राङ्नयति प्रभाते ताराप्रसूनानि यतोऽभ्रदेशः ॥१४॥
धरापरागेण च यत्र नृत्यद्वाराङ्गनाचङ्क्रमणोत्थितेन ।
मग्नेन पङ्कीभवता सुधांशौ कलङ्कशङ्कावतरो वितेने ॥ १५ ॥
यत्तुङ्गशृङ्गस्खलनप्रसङ्गप्रकामसम्भावितभङ्गभीत्या ।
दिनेश्वरः प्रार्थितविश्वकर्मा चक्रे निजस्यन्दनमेकचक्रम् ॥ १६ ॥
यदीयशृङ्गे स्खलति प्रतुङ्गे दिनेश्वरस्यन्दननेमिधारा ।
मयूरमोराचलमध्यभागे कुतोऽन्यथा खण्डितभूमिरेखा ॥ १७ ॥
यत्रैकवीरा शबरीशरीरा नीराजिता वीरकिरीटहारैः ।
स्वभक्तसर्वेप्सितदानदक्षा साक्षादहो नन्दति विश्वमाता ॥१८॥
विदेहपुत्रीपरिपूजितो यश्चराचराधारपदारविन्दः ।
सिन्दूरपूरद्युतिचुम्बिकुम्भो गजाननस्तिष्ठति यत्र साक्षात् ॥१९॥
उत्फुल्लमल्लीलवलीमतल्लीवल्लीसमुद्यत्कुसुमच्छलेन ।
कैलासहेमाचलशीतशैलानदर्शनीयान्हसतीव भूयः ॥ २० ॥

दृष्टोऽपि भूयिष्ठमसौ नृपस्य परं चमत्कारभरं चकार ।
प्रेमैकपात्रं रमणीयवस्तु प्रतिक्षणं नूतनतां तनोति ॥ २१ ॥
दिगन्तविश्रान्तगभीरभेरीभाङ्कारकोलाहलमाकलय्य ।
पर्याकुलः पौरजनस्तदानीं सौधाग्रमासाद्य ददर्श सैन्यम् ॥२२॥
स प्राप नारायणसैन्यभारो मयूरशैलं मुदितस्तदानीम् ।
सूर्योऽपि पूर्वाचलमौलिहर्म्यं नारायणं वीक्षितुमारुरोह ॥ २३ ॥
स नागरीभिर्नयनारविन्दैराचारलाजैश्च कृतोपचारः ।
उत्तोरणं वारणराजहार्य(?)श्चतुष्पथं प्रापदुरुप्रतापः ॥ २४ ॥
उत्तुङ्गसौधाग्रलसत्पताकाचेलाञ्चलाकारणमादधानम् ।
समस्तसम्पत्तिभरेण पूर्णं समासदद्राजगृहं महीपः ॥ २५ ॥
अमात्यवर्गो विनयप्रधानो नयप्रधानो विलसद्गुणाय ।
श्रीशाहनारायणपार्थिवाय राज्याभिषेकोत्सवमित्यकार्षीत् ॥२६॥
आनीय गङ्गायमुनादिनानासत्तीर्थसार्थादमलोदकानि ।
सुवर्णकुम्भानभिषेकहेतोरपूरयन्मन्त्रिगणस्सहर्षः ॥ २७ ॥
तीर्थाहृतैः काञ्चनकुम्भतोयैर्गुरुं पुरस्कृत्य समन्त्रघोषम् ।
नारायणं भैरवभूपराज्ये समुल्लसन्मङ्गलमभ्यषिञ्चत् ॥ २८ ॥
सुवर्णकुम्भाहरणप्रवीणपाणिस्खलत्कङ्कणनादमिश्रः ।
ससम्भ्रमं पौरविलासिनीनां मञ्जीरमञ्जुध्वनिरुल्ललास ॥ २९ ॥
तूर्याणि नेदुर्ननृतुर्नटौघाः समुज्जगुर्गीतकलाप्रवीणाः ।
पेठुः प्रबन्धान्बिरुदावलीनां तत्रोत्सवे मागधबन्दिनोऽपि ॥ ३० ॥
द्वात्रिंशता हेममयैरुदारैः सिंहैः समासादितभूरिशोभम् ।
सुमेरुशृङ्गं मृगराडिवासौ सौवर्णसिंहासनमध्यतिष्ठत् ॥ ३१ ॥
परिस्फुरत्काञ्चनदण्डशोभि छत्रं निरीक्ष्य क्षितिपालमौलौ ।
मुखश्रिया निर्जितमिन्दुबिम्बं किमागतं सेवितुमित्यमानि ॥३२॥
आन्दोलनावत्करकङ्कणालीकोलाहलोन्निद्रितमन्मथाभ्याम् ।
महीपतिर्लोहितचामराभ्यां विलासिनीभ्यां परिवीज्यते स्म ॥३३॥
गुणोत्करस्पर्शवशेन भूमिं हिरण्मयीमेव विधाय वोढा ।
स मौलिना हैमकिरीटभाजा विचक्षणैरित्यनुमीयते स्म ॥ ३४ ॥

मन्त्राक्षतैरक्षतशक्तियुक्तैरहो हरिद्रारससङ्गपिङ्गैः ।
तस्यार्चितः प्राह ललाटपट्टः सुवर्णवर्गैरिव भाग्यशोभाम् ॥ ३५ ॥
भूमण्डलाखण्डलमण्डलानां स्यादेष नूनं तिलकायमानः ।
प्रसाधकैरित्यनुमाय हैमस्तदीयभाले तिलको न्यधायि ॥ ३६ ॥
सौवर्णपट्टं मुकुटे दधानः स्फुरद्दुकूले विमले वसानः ।
स राज्यलक्ष्मीं रुचिरां वृणानस्तदा विवाहोत्सवभागिवाभूत् ॥ ३७ ॥
गवां गणं काञ्चनमालिनीनां प्रदाय राज्ञा जगतीसुरेभ्यः ।
अमोचि कारागृहवर्त्तिलोको न केवलं पञ्जरपत्रिणोऽपि ॥ ३८ ॥
अथ स्फुरच्चामरवीजितस्तां सभां विभान्तीमभिगम्य रम्याम् ।
श्रीशाहनारायणभूमिपालः सिंहासनं मण्डयति स्म हैमम् ॥३९॥
बुधैरनेकैर्गुरुभिः कवीनां गणैः कलानां निधिभिश्च याऽसौ ।
अनेन गोत्रप्रतिपालकेन रेजेऽधिकं गोत्रभिदः सभायाः ॥ ४० ॥
मित्रद्विजज्ञातिगुरुप्रधानविद्वत्सुहृद्बान्धवगायकाद्याः ।
निरन्तरं दक्षिणपार्श्वभागे तिष्ठन्ति यत्र क्षितिवल्लभस्य ॥ ४१ ॥
अनेकनानास्त्रधराः प्रवीरा यत्र प्रभोः पश्चिमदिग्विभागे ।
सामन्तसम्बन्धिवयस्यपौरचमूचराश्चोत्तरदिग्विभागे ॥ ४२ ॥
यस्यां पठन्मागधबन्दिसूतगन्धर्वनृत्यद्भरता नृपाग्रे ।
दूरेण तेभ्योऽधरभूमिभागे सदा निषादाधिपवृन्दमास्ते ॥ ४३ ॥
यस्यां महाराजनिदेशसारा दिगन्तविश्रान्तयशःप्रसाराः ।
गुणैरुदाराः परिभूतमारास्तिष्ठन्ति वीरप्रवराः कुमाराः ॥ ४४ ॥
यस्यां नमन्मौलिललामदीपैर्भूपालपादाम्बुजहेमपीठम् ।
समस्तसामन्तनृपालवीरा नीराजयन्ति स्फुटमादरेण ॥ ४५ ॥
यत्र स्फुरत्पण्डितमण्डलीनां चकास्ति षड्दर्शनसागरेषु ।
तत्त्वावबोधामृतसारदोहे(हो) विचारमन्थाचलचारुघोषः ॥ ४६ ॥
साहित्यगर्भैर्विशदप्रसादैः पीयूषधारामधुरैर्वचोभिः ।
सभा कवीनामधिपावदानं यस्यासुपश्लोकयति प्रवीणा ॥ ४७ ॥
लोकत्रये भूतचरं भवन्तं तथाखिलं भाविनमर्थसार्थम् ।
करारविन्दामलकायमानं ज्योतिर्विदो यत्र निवेदयन्ति ॥ ४८ ॥

सर्वेषु रोगेषु चिराय दूरे येभ्यो भयादेव पलायितेषु ।
नानारसोत्तारणजन्यखेदं भजन्ति यस्यां न कदापि वैद्याः॥४९॥
अनेकसङ्गीतविदामजस्रसान्निध्ययोगात्सुतरां प्रवीणाः ।
गायन्ति यस्यां क्षितिपालकीर्तीर्विलासशारीशुकराजहंसाः॥५०॥
यस्यां सदा वारसरोरुहाक्षीविलासलास्योत्सवकौतुकानि ।
सचेतसः कस्य न चित्तवृत्तिं कुर्वन्ति कन्दर्पसमुद्रमग्नाम् ॥ ५१ ॥
समग्रभूपालचरित्रलक्ष्यं विधाय यस्यां ननु पूर्वपक्षम् ।
श्रीशाहनारायणराजवृत्तं सिद्धान्तयत्युत्तमवन्दिवृन्दम् ॥ ५२ ॥
गुणैरुदारे नृपतौ गुणिभ्यस्तद्याचितादप्यधिकं ददाने ।
यत्रोपविष्टो जितकल्पवृक्षो वदान्यवर्गोऽपि चमत्चकार ॥ ५३ ॥
मरीचिवीचीरमणीयरत्नस्तम्भाः स्फुरत्काञ्चनभित्तयश्च ।
सभाजनाङ्गप्रतिबिम्बसङ्गात्सजीवचित्रा इव यत्र रेजुः ॥ ५४ ॥
चतुःसमुद्रावलिराजमानवसुन्धरामण्डलमन्दिराणाम् ।
आनन्दसन्दोहजुषां जनानां सम्पद्यते यत्र समस्तकार्यम् ॥५५॥
नमस्कृतो यत्र जनैः स राजा दिने दिने लब्धकलाकलापः ।
तमो विलुम्पन् जगति प्रजानां नवोदितश्चन्द्र इव व्यराजत् ॥५६॥
यत्रोपविष्टः सुकृतैकनिष्ठः सतां वरिष्ठः प्रचुरप्रतिष्ठः ।
तदाऽवदद्वागुलवंशदीपः प्रतीतचित्तः परमासवर्यान् ॥ ५७ ॥

यत्सर्वे मयि सानुरागमनसः साम्राज्यमासादितं
पूर्वेषां च यशः स्थिरं यदरयो जाताश्च वाताहताः ।
सोऽयं पर्वतनन्दिनीशमहिमा देव्या जनन्यास्तथा
श्रीमद्भैरवपार्थिवस्य चरणाम्भोजप्रसादोदयः ॥ ५८ ॥
चिरंजीव महाराज सत्यमेव वचस्तव ।
सभाविभासिभिः सभ्यैरिति भूपोऽभ्यनन्दितः ॥ ५९ ॥

निशम्य नारायणभूमिभर्तुश्चेतश्चमत्कारकरीं गिरं ताम् ।
आनन्दवल्गत्पलितोरुमौलिस्ततोऽवदच्छार्ङ्गधरो गरीयान् ॥६०॥
राजंस्त्वदीया जननी यमाम्बा सा केन वर्ण्या जगतामिवाम्बा ।
पतिव्रतावृन्दपवित्रचित्रचारित्रसम्पादनसिद्धभूमिः ॥ ६१ ॥

यस्याः समाकर्ण्य गुणानगण्यान् हरावुदञ्चत्पुलके सलज्जा ।
तपोविधानाय तदादि पद्मा पद्मासनं मुञ्चति नाधुनापि ॥ ६२ ॥
गोभूमिवासःकलधौतमुक्तातुरङ्गमातङ्गनिकेतनानाम् ।
अकल्पितान्याश्रितकल्पवल्या दानान्यनेकानि यया कृतानि ॥६३॥
दत्तं विना विस्मरणं न यस्याः कदापि कस्यापि विवेकवल्याः ।
सुधागिरं माधवकीर्त्तिगङ्गास्नाता न पस्पर्श यदीयजिह्वा ॥ ६४ ॥
या भैरवानन्दकरी विराजद्विशालनेत्रा मणिकर्णिकाढ्या ।
कारागृहान्मोचितसर्वजन्तुर्वाराणसीवातितरां विरेजे ॥ ६५ ॥
यस्याः शरच्चन्द्रमरीचिगौरीगुणैस्तरङ्गैरिव राजमाना ।
भागीरथीव स्पृहणीयकीर्त्तिः सर्वं वरीवर्त्ति जगत्पवित्रम् ॥ ६६ ॥
या श्रीमहादेववधूरपर्णा कापि स्फुरत्काञ्चनकल्पवल्ली ।
सदैव नारायणवन्द्यमाना गौरीव कल्याणकरी विरेजे ॥ ६७ ॥
अरुन्धतीमुख्यसमस्तसाध्वीश्चिराय चित्तानितु(?)वाक्यरुद्धाः ।
आत्मानमाबध्य किलात्मनैव या मोचयामास गुणैरुदारा ॥६८॥
अस्मादृशानामिव मूर्त्तभाग्यं नारायणो नाम च वर्णितोऽभूत् ।
तस्याः प्रसादेन यमाम्बिकायाः किं किं न सम्भावितमिष्टजातम् ॥६९॥
इमां समाकर्ण्य गिरं मनोज्ञां गरीयसीं शार्ङ्गधरद्विजस्य ।
श्रीशाहनारायणसार्वभौमस्तदा मुदा निर्भरमभ्यनन्दत् ॥ ७० ॥
अथ शार्ङ्गधरात्मजेन राजा जगदे लक्ष्मणपण्डितेन तेन ।
श्रवणेन बृहस्पतिः कुमारः पितृभक्त्या विनयेन लक्ष्मणो यः ॥७१॥
यस्याः कुक्षौ दिनकरकुलोदारकोटीरहीरः
साक्षान्नारायणनरमणिर्विश्वसंरक्षणाय ।
कौसल्याया इव नृपवरो रामभद्रोऽवतीर्णः
सेयं केषामिव गुणवती नार्चनीया यमाम्बा ॥ ७२ ॥
अद्यापि दानोदकसिन्धुबिन्दुव्रातस्फुरन्मौक्तिकहारहृद्याम् ।
विप्राग्रहाराः सुतरामुदाराः सर्वत्र यस्याः प्रथयन्ति कीर्त्तिम् ॥७३॥
इत्थं गिरं लक्ष्मणपण्डितीयामाकर्ण्य नारायणभूमिपालः ।
आनन्दसन्दोहसुधासरस्वत्तरङ्गरिङ्गत्तरमानसोऽभूत् ॥ ७४ ॥

लुमायिर्जिं शार्ङ्गधराख्यपण्डितं ततस्तृतीयं किल भावपण्डितम् ।
दुर्गावतीवीरमसेनहूतये स प्राहिणोन्मूर्ध्नि मयूरभूभृतः ॥ ७५ ॥
ते तत्र गत्वा विनयप्रधानैरमुष्य वाक्यैः परितोष्य राज्ञः ।
तौ दम्पती वीतभयौ तदानीमानिन्युरुर्वीशतमन्युधाम ॥ ७६ ॥
आलिङ्ग्य गाढं सुभुजो भुजाभ्यां मूर्द्धानमाघ्राय च सानुरागम् ।
श्रीवीरसेनः प्रणतं पुरस्तादुपस्थितं सोदरमित्यवादीत् ॥ ७७ ॥

आयुष्मान्भव वत्स सम्प्रति जरावैक्लव्यविप्लाविताः
क्षोणीरक्षणसङ्कटाद्वयमितो निष्कास्य वीर त्वया ।
श्रीगोविन्दपदारविन्दभजने सानन्दमासादिताः
सेयं कापि तवौचिती विजयते भक्तिं गुरौ तन्वतः ॥ ७८ ॥

एवं श्रीवीरसेनक्षितिपकुलमणेर्वाचमाकर्ण्य सारा-
मेतस्मै शाहनारायणधरणिपतिर्धर्मपत्नीयुताय ।
दत्त्वा नानासुवर्णाभरणमणिगणग्रामवासोहयादीं-
स्तूर्णं संपत्तिपूर्णं सततवसतये सौधमेकं व्यतार्षीत् ॥ ७९ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नवमोऽभिषेकरसिकस्सर्गो निसर्गोज्ज्वलः ॥ ८० ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोज-
मयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते
राष्ट्रौढवंशे महाकाव्ये नवमस्सर्गः ॥

---

## दशमस्सर्गः ।

अथो मयूराचलसानुभानुर्नृपः प्रजाऽऽपत्तिवनीकृशानुः ।
पुरन्दरश्रीर्भजते स्म सारं चिराय साम्राज्यसुखावतारम् ॥ १ ॥
स नीतिरीतिं मनुना प्रणीतां नितान्तमानन्दकरीं वितन्वन् ।
अभून्मयूराचलराजहंसः समस्तभूपालकुलावतंसः ॥ २ ॥

सम्प्राप्य तं सर्वगुणाभिरामं राजानमाजानुविलम्बिबाहुम् ।
आनन्दसन्दोहनिमग्नचित्तास्तदा बभूवुः प्रकृतिप्रधानाः ॥ ३ ॥
वर्णैरसङ्कीर्णतया पवित्रैः स्फुरच्चरित्रैर्विदधे स्वधर्मः ।
पट्टाम्बरेषु प्रचुरेषु वर्णसाङ्कर्यमासीत्परमस्य राज्ये ॥ ४ ॥
तस्मिन्महीं शासति राजसिंहे सद्योमनोहारिणि कार्मुकानाम् ।
अभूत्परं पङ्कजलोचनानां नेत्राञ्चले तस्करशब्दवृत्तिः ॥ ५ ॥
सिंहासनाध्यासिनि तत्र वीरे मृगीदृशामेव विलोचनानाम् ।
बभूव कालाञ्जनपङ्कसङ्गादकीर्त्तिपूरः श्रुतिलङ्घनेन ॥ ६ ॥
तस्मिन्नृपे कुर्वति रामराज्ये बभूव दण्डः कुसुमोत्कराणाम् ।
धम्मिल्लभारे परमङ्गनानां नितान्तमासक्तिमुपागतानाम् ॥ ७ ॥
प्रकुर्वतोः कामुकदृष्टिरोधं कठोरयोरुन्नतवृत्तयोश्च ।
वक्षोजयोरेव मृगेक्षणानां तस्मिन्नृपे काञ्चनशृङ्खलाऽभूत् ॥ ८ ॥
तदीयराज्ये वनवासिनीनां मृगाङ्गनानां च पुराङ्गनानाम् ।
स्पर्द्धा परं चञ्चलचेष्टितानां विलोचनानां विषये बभूव ॥ ९ ॥
मनस्विनां मानसमीनबन्धे जालायमानः स्मरधीवरस्य ।
विलासिनीनां मलिनोऽतिवक्रो वेणीकलापः परमाप बन्धम् ॥ १० ॥
तस्मिन्नहो जाग्रति राजहीरे कदापि नासीत्कलहः प्रजानाम् ।
विदग्धयूनोः परमं कदाचित्सप्रीतिपूर्वः क्षणमाविरासीत् ॥ ११ ॥
तस्योदये दातरि दक्षपाणौ कुर्वन्निषेधं परिवेषकस्य ।
परं न वामः सहते स्म पाणिः शौचैककार्ये विहिताधिकारः ॥ १२ ॥
तस्मिन्महीं शासति वीरहीरे परं नवोढाजनमानसेषु ।
भयावतारः प्रियसङ्गमेऽभूदन्यत्र कुत्रापि कदापि नासीत् ॥ १३ ॥
तस्मिन्महीं रक्षति पादपानां नासन्फलान्येव पचेलिमानि ।
नितान्तमानन्दजुषां प्रजानां भाग्यान्यपि प्राग्भवसञ्चितानि ॥ १४ ॥
सर्वत्र सत्रप्रकरप्रपाणां सङ्घे पुरग्रामपथान्तरेषु ।
तेन क्षितीशेन सति प्रणीते दीनान्धसङ्घा न कदाप्यसीदन् ॥ १५ ॥
तन्वत्यमुष्मिन्कुशलं प्रजानां बभूव देवः किल कामवर्षी ।
प्रभूतसस्या च मही प्रशस्ता प्रासानि पौरैः पुरुषायुषाणि ॥ १६ ॥

कोपाकुलान्सामभिरर्थलुब्धान्दानेन भेदेन तथा समर्थान् ।
दण्डेन नीचान्वशयन्नरेन्द्रः स्वाधीनमाधादिति सर्वराष्ट्रम् ॥ १७॥
समन्ततो जाग्रति तत्प्रतापे वातोऽपि पस्पर्श न पान्थलोकान् ।
कुतः कथा तत्र च तस्कराणां कुतस्तरां नाम धनापहारः ॥१८॥
तस्मिन्परं भूभुजि दाडिमानां भिदेलिमं नो हृदयं बभूव ।
भूमण्डलाखण्डलमण्डलानामपि प्रचण्डाशुगखण्डितानाम् ॥१९॥
बिम्बोष्ठनेत्रोत्पलकान्तिसङ्गाद्गुञ्जोपमं तच्चकितारिनार्याः ।
नीतानि मार्गेऽखिलभूषणानि चौरेण मुक्ताफलकं न नीतम् ॥२०॥
दिने दिने निर्मलदाननीरैर्नारायणेनैष विवर्द्धितो यः ।
तस्य स्फुरत्कीर्त्तितरोः प्रतीमः पुष्पाणि ताराः फलमिन्दुबिम्बम् ॥२१॥
आपूर्वशैलाच्चरमाचलाच्च प्रालेयशैलान्मलयाचलाच्च ।
आज्ञां यदीयां शिरसा समग्रा भूषामिव क्षोणिभुजो वहन्ति॥२२॥
अस्ताचलः प्रागुदयाचलस्तु प्रत्यक्तुषाराद्रिरवाग्विभागे ।
उदक् पटीराचल इत्युदारास्तदीयकीर्त्तेर्गतयो विचित्राः ॥ २३ ॥
सन्ति क्षितौ भूमिभुजः सहस्रं राजन्वती भूरमुनैव राज्ञा ।
दिवि ग्रहा जाग्रति वा न के के मार्त्तण्डशोभामुपयातु को वा ॥२४॥
त्रैलोक्यमुक्ताफलकर्णपूरैः स्वकीर्त्तिकर्पूरपरागपूरैः ।
दिक्कन्यकानां कुतुकेन धूलीकेलीविलासानकरोन्नरेन्द्रः ॥ २५ ॥
आश्चर्यमेतस्य विराजमाने प्रतापसूर्ये रिपुसुन्दरीणाम् ।
मुखारविन्दानि निमीलितानि प्रभूतपूरा नयनाम्बुनद्यः ॥ २६ ॥
मयूरभूमीधरसंस्थितोऽपि समस्तभूमीपतिमण्डलानि ।
सहस्रधामेव करैरुदारैश्चारैः समाक्रामति स स्म वीरः ॥ २७ ॥
भक्त्याऽधमर्णीकृतरामचन्द्रः कीर्त्त्या वराकीकृतपूर्णचन्द्रः ।
दानेन कर्णः तरसा सुपर्णः सोऽभूदभीः पालितसर्ववर्णः ॥ २८ ॥
स प्रत्यङ्काद्भिरूपमेव व्यधात्प्रतिज्ञातममोघमेव ।
स नूनं नात्र मुधाप्रतिज्ञः प्रतिश्रुतादप्यधिकप्रदाने ॥ २९ ॥

आपातरम्यैर्विषयैरमीभिः कदाप्यनाकृष्टमना मनस्वी ।
धर्मैकमूर्त्तिर्वयसा युवाऽपि ज्ञानेन वृद्धः समभून्नरेन्द्रः ॥ ३० ॥

लोकोत्तरां तस्य शरीरशोभामालोक्य खर्वीकृतरूपगर्वः ।
मन्ये महादेवदृगग्निकुण्डे स्वदेहपातं मदनश्चकार ॥ ३१ ॥

पदातिमातङ्गतुरङ्गमाणां पुरा कृशानाममुना नृपेण ।
निदाघसन्तप्तसरोवराणां धाराधरेणापि कृताऽतिपुष्टिः ॥ ३२ ॥

महौजसो दत्तनितान्तवित्ताः सङ्ग्रामसम्प्राप्तयशःप्रतापाः ।
धनुर्भृतो भूमिपुरन्दरस्य प्राणैरपि प्रत्युपकर्त्तुमीषुः ॥ ३३ ॥

नारायणक्षोणिभुजा सनाथा सम्पूर्णसर्वाङ्गविराजमाना ।
आनन्दपीयूषपयोधिमग्ना सा राज्यलक्ष्मीः सुतरां विरेजे ॥३४॥

विद्वन्मण्डलकल्पपादपवनं विद्योतिवाग्देवता-
सङ्केतायतनं नितान्तकमलालीलाविलासास्पदम् ।
लक्ष्मीवल्लभभक्तिभाण्डभवनं भूमण्डलीमण्डनं
कीर्त्तेः केलिनिकेतनं विजयते श्रीशाहनारायणः ॥ ३५ ॥

यत्कीर्त्तिः प्रसरीसरीति परितो यत्पाणिपद्मे रमा
सानन्दं विजरीहरीति वदने वाणी नरीनर्त्ति च ।
श्यामं धाम बरीभरीति हृदये यो रामनामास्पदं
सोऽयं धर्मरतिः सदा विजयते नारायणक्ष्मापतिः ॥ ३६ ॥

यस्मादुत्पन्नशङ्काः प्रतिभटपृथिवीनायकाः सायकाङ्काः
कौपीनाङ्काः कथञ्चिद्गिरिवरविवरे वासरान्वाहयन्ति ।
नम्रक्ष्मापालमालामुकुटमणिमहोराजिनीराजिताङ्घ्रि-
स्तस्मान्नारायणक्ष्मापतिकुलतिलकात्कः परः सार्वभौमः ॥३७॥

नित्यं नूतनहेमरङ्कनिकरैश्चाम्पेयपुष्पोत्करै-
र्विश्वाशावनवीथिमुज्ज्वलमहामुद्राभरैर्माधुरैः ।
यः श्रीमाननवेक्षणीयवपुषं कुर्वन्वसन्तोऽद्भुतः
सानन्दं सकलं यशःपरिमलैर्ब्रह्माण्डमापूरयत् ॥ [illegible] ॥

राष्ट्रौढक्षितिपालभालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्दशमः सुराज्यमुदितः सर्गोऽगमत्सुन्दरः ॥ ३९ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोजमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये राज्यमहोत्सवो नाम दशमस्सर्गः ॥

---

## एकादशः सर्गः ।

एतस्मिन्समयेऽथ दक्षिणमहीपालस्य सेनाधिपाः
श्रीनारायणशाहदोर्बलमहावह्नेः पतङ्गा इव ।
प्रोन्मत्तद्विशतद्विपायुतयुगप्रेङ्खत्तुरङ्गैर्युता
मूढाः प्रापुरनन्तनामकपुरं जेतुं मयूराचलम् ॥ १ ॥
अथ विपक्षसपक्षचमूचराः स्फुरदनन्तपुरस्थपटीगृहाः ।
समरकामनया मिलितास्तदा नवपुरे वपुरेव किमुज्झितुम् ॥ २ ॥
जयरमावरणोत्सवसूचकस्फुरणपीवरदक्षिणबाहुना ।
सपदि भैरवभूपतिसूनुना परिगतोऽरिगतोऽखिलगोचरः ॥ ३ ॥
नवपुरोपगतारिपताकिनीविघटनाय मयूरगिरेरधः ।
अथ नियोजयति स्म चमूचरं स चतुरं चतुरङ्गबलान्वितम् ॥ ४ ॥
सिततुरङ्गगतो नृपतिः प्रतिक्षितिपुरन्दरकुञ्जरकेसरी ।
निरगमद्भवनाद्बहिरुल्लसत्परिजनोऽरिजनोदयशान्तये ॥ ५ ॥
महीपतिः केलिसमीपतः ········· पर्वतराजधान्याः ।
प्राकारमूर्द्धानमुपेत्य तूर्णं विपक्षसैन्यार्णवमीक्षते स्म ॥ ६ ॥
भानुः प्रतापिभिरुदारयशोभिरिन्दु-
स्तातः प्रजाभिररिभिः कुपितः कृतान्तः ।
कल्पद्रुमो गुणिजनैर्मदनोऽङ्गनाभि-
र्नारायणक्षितिपतिः स तदा व्यलोकि ॥ ७ ॥

अस्याद्रेः कटकस्थलेषु परितः प्रान्तप्रदेशेषु च
प्राकारेषु चतुष्पथेषु नगरद्वारेष्वगारेषु च ।
वीरानग्रबलान्धनुःशरकरानाधाय नारायण-
क्षोणीशः किल दक्षिणक्षितिपतेरक्षौहिणीमक्षिणोत् ॥ ८ ॥

मोराचले हरिगिरौ च मयूरशैले
दुर्गाधिकारिनिकराः समरप्रवीराः ।
नालीकमुख्यनिखिलप्रचुरप्रचण्ड-
यन्त्रोदरेष्वबिभरुः सममौषधानि ॥ ९ ॥

नानाविधागणितयन्त्रगणेषु वर्त्तीसंसर्गमात्रसमयज्वलदौषधेषु ।
कोलाहलः प्रलयकालभवत्करालश्रीकालभैरवविरावगुरुर्बभूव ॥१०॥

लोकानाकुलयन्नभः कवलयन्दिक्कुम्भिनः कम्पयन्
भूगोलं चलयन् गिरीन्विदलयन्नम्भोधिमुद्वेलयन् ।
दिग्वृन्दं भ्रमयन्मनो विकलयन्ब्रह्माण्डमास्फोटयन्
तत्रातर्कितमेककालमभवद्यन्त्रालिकोलाहलः ॥ ११ ॥

दिग्व्यापी देवतानामनिमिषनयनश्रेणिषु स्वैरचारी
धूमस्तोमस्तदानीं समजनि रभसादम्बुदाडम्बराभः ।
जानीमः शाहनारायणविशिखमहावर्षशाम्यत्प्रतीप-
क्षोणीपालप्रतापप्रखरतरचिराशीर्णवैश्वानरस्य ॥ १२ ॥

ततः प्रतप्तायसगोलमण्डलः खमण्डलं व्याप्य दिशः प्रकाशयन् ।
विपक्षकक्षं प्रति भैरवात्मजप्रतापदावाग्निरिवाङ्गवानगात् ॥ १३ ॥

जाज्वल्यमानायसगोलकाली स्वैरं चचारारिवरूथिनीषु ।
भक्तिप्रसन्नीकृतचक्रपाणेर्नानाभवन्तीव सुदर्शनाली ॥ १४ ॥

केनाप्यायसगोलकेन कतिचिद्व्यापादिताः कुञ्जरा
धावन्तस्तुरगाश्च केनचिदहो दग्धाः कति स्यन्दनाः ।
अन्येनापि पदातयः कतिपये केनापि सेनाधिपाः
शत्रूणामिति तुर्यभागरहिता सेना तदानीमभूत् ॥ १५ ॥

अत्रान्तरे शिखिमहीधरतोऽवतीर्णो
नारायणक्षितिपतेः पृतनाधिनाथः ।
उच्चैर्नदन्किल पलायनलालसानां
पृष्ठे ललाग सहसा रिपुसैनिकानाम् ॥ १६ ॥

केऽपि श्वाससमाकुलाः परिपतद्दन्तं निपेतुः क्षितौ
केचिन्निस्सहजानुभागविकलाः कम्पाकुलाश्चस्खलुः ।
अन्ये केचन तत्र कातरधियः प्राणान्जहुस्तत्क्षणं
पुत्रान्नः परिपालयेति शरणं वीरा ययुश्चापरे ॥ १७ ॥

खड्गत्रुटद्गात्रविनिर्यदस्रप्रवाहविप्लावितदुर्गमार्गाः ।
शेषाः परेऽनन्तपुरे कृतानि प्रापुः कथञ्चित्पटमन्दिराणि ॥ १८ ॥

अथ ते रथकुञ्जरवंशभरैरपरैरपि भूमिरुहप्रकरैः ।
त्वरया परया कटकं परितो रिपुतो भयतो वलयं विदधुः ॥ १९ ॥

केचित्तत्र विपन्नबान्धवसुहृन्मित्रादिशोकाकुलाः
सन्तेपुर्वसनैर्बबन्धुरपरे घोरासिधाराव्रणान् ।
अन्ये कालमुखान्तरालपतिताः सा हेमकुम्भस्तनी
हा भूयः परिरप्स्यते प्रियतमा सोद्वेगमित्यालपन् ॥ २० ॥

महीपतिस्तेषु तथाविधेषु पराक्रमं नोत्सहते स्म कर्त्तुम् ।
कदापि सूनुः किमु सिंहिकायाः प्रक्षीणमिन्दुं ग्रसते मनस्वी॥२१॥

श्रीनारायणशाहपार्थिवगुरुः प्रत्यर्थिपृथ्वीभृतां
साटोपं परिणीय कीर्त्तितनयां कुन्दावदातां स्वयम् ।
अस्मिन्नेव महोत्सवे हरिहराहूतेः कुमारस्य च
प्रोल्लासेन विवाहमङ्गलमहाकार्यं व्यधादादरात् ॥ २२ ॥

तूर्णं प्रतीपनृपतेरथ कोऽपि वीरः
प्राप स्ववर्गविजयाय पुरीमरावीम् ।
नारायणक्षितिपतेः सुभटेन तस्यां
जित्वैनमस्य सकलापि चमूरलुण्ठि ॥ २३ ॥

अत्रान्तरे रिपुचमूः कमनीयदेवस्थानाभिधानपुरमाशु समाजगाम ।
सेयं मयूरगिरिनायकसैन्यमध्याद्वीरैर्ग्रहैरिव वपुर्नवभिर्निरस्ता॥२४॥

विनीय तत्रैव दिनैः कियद्भिः प्रहारमूर्च्छां स पुनर्बलौघः ।
भुक्त्वाऽवशिष्टप्रबलस्वकर्मप्रभावनुन्नो रणमाचकाङ्क्ष ॥ २५ ॥

वामे विधाय किल घाटशिलाख्यशैलं
नाराचलं हरिणमालमहीधरं च ।
पूर्वानुभूतविविधास्त्रनिपातभीत्या
वक्राध्वना सपदि जाम्बवटीं ययुस्ते ॥ २६ ॥

ततो मयूराचलतीर्थभूमौ शरीरपातं किमु कर्त्तुकामम् ।
प्रचण्डमाटीकत मोखघट्टे वटोपकण्ठे कटकं भटानाम् ॥ २७ ॥

आकर्ण्य तान्मोखवटे समेतान्नारायणक्षोणिपतिस्तदानीम् ।
विहारसौधान्निजवीरवर्गैराशोभितां भद्रसभामयासीत् ॥ २८ ॥

तं सूर्यपादान्वितमेघडम्बरच्छत्राधिकच्छायमुखेन्दुमण्डलम् ।
परिस्फुरच्चामरयुग्मवीजितं सामन्तभूमीपतयो ववन्दिरे ॥ २९ ॥

विपक्षपक्षक्षयसाधनानि प्रदाय तेभ्यः क्षितिपालमौलिः ।
तुरङ्गमुत्तुङ्गतरं सिताङ्गं सान्नाह्यमारोहदुदारतेजाः ॥ ३० ॥

मयूरगिरिगह्वरप्रतिविरावतारीभव-
द्रणत्समरडिण्डिमध्वनिगभीरभेरीरवैः ।
जगाम सुरकामिनीकथितमण्डनाडम्बरः
स्फुरत्कटकसागरः समरजित्वरः सत्वरः ॥ ३१ ॥

अरिनीहारनाशाय नारायणनराधिपः ।
जैत्रापुरद्वारदेशप्राकारशिरसि स्थितः ॥ ३२ ॥

अधुनैव पराजितैरमीभिर्मशकैर्न स्वयमाहवः प्रशस्यः ।
इति चारु विचार्य राजसिंहः प्रतिवीरेषु युयोज पत्तिसैन्यम् ॥ ३३ ॥

उभयोरथ सेनयोस्तयोः समरोऽभूत्तुमुलः समेतयोः ।
दिवि देवचकोरचक्षुषामपि(वीरान्प्रति)विग्रहोऽभवत् ॥ ३४ ॥

तत्र सङ्गरकुतूहलहर्म्ये भैरवक्षितिपनन्दनसैन्ये ।
लक्ष्यते स्म परमं जयलक्ष्मीपक्षपातकमनीयकटाक्षः ॥ ३५ ॥

श्रीनारायणशाहसैन्यजलदे चञ्चत्कृपाणीतडि-
द्दाम्नि छन्नरिपुप्रतापतपने बाणावलिं वर्षति ।

पूर्णा शोणितवाहिनी सुरवधूकन्दर्पदावानलः
शान्तोऽभूद्विरराम वैरिवनितासीमन्तमार्गोदयः ॥ ३६ ॥
चक्रुर्नृत्यकुतूहलानि परितो वल्गत्कबन्धालयो
वीरोत्तालकपालतालरणितं तेनुः पिशाचाङ्गनाः ।
श्रीनारायणभूमिपालतिलकप्रौढप्रतापं जगुः
सन्तृप्ताः पिशितेन राक्षसगणाः सङ्ग्रामरङ्गाङ्गणे ॥ ३७ ॥
तान्पलायनपरान्परानथ प्रेक्ष्य भैरवतनूजसैनिकैः ।
वस्त्रवारणतुरङ्गमायुधद्रव्यसम्पदखिलाऽपि लुण्ठिता ॥ ३८ ॥
निर्यच्छोणितपूरताम्रवपुषः स्वैरं रुदन्तो मुहु-
र्न्यञ्चन्मुद्गरघातभग्नदशना दिग्वाससो निस्त्रपाः ।
उद्गच्छज्जठरान्त्रनालसहितास्तेनूनमासन्पुन-
र्जन्मानो रणभूमिमातुरुदरात्तत्कालमेव च्युताः ॥ ३९ ॥
विहाय कीर्त्तिं घनसारगौरीमकीर्त्तिमादाय विधेयमूढाः ।
सर्वे प्रतीपक्षितिपालशूराः शरीरमात्रेण ययुः स्वदेशम् ॥ ४० ॥
अथ द्विषां केतुतुरङ्गनागान्वस्त्राणि शस्त्राणि च कोशजातम् ।
आनीय नारायणराजसिंहं प्रणेमुरुत्फुल्लमुखाः प्रवीराः ॥ ४१ ॥
विहाय लक्ष्मीपतिलक्ष्मकेतुं तथा नृपैकाश्रयवारणेन्द्रान् ।
यल्लुण्ठितं येन तदेव तस्मै नृपः प्रमोदाददादुदारः ॥ ४२ ॥
विरलरत्नाभरणाम्बराणि सुवर्णटङ्कानथ भूषणानि ।
ग्रामाननेकानपि सैनिकेभ्यस्तदाऽददाद्भूमिपतिः कृतज्ञः ॥ ४३ ॥
उद्दामदुन्दुभिनिनादगभीरभेरीभाङ्काररावमुखरीकृतदिक्कदम्बः ।
सेनाचरैः सममगादगराजसारो भद्रासनं सपदि भैरवभूपसूनुः ॥ ४४ ॥
तत्र सद्मनि सुवर्णमञ्चकं मण्डयन्वसुमतीशतक्रतुः ।
किङ्करीकृतसमस्तभूपतिर्भूमिमेकनगरीमिवाभुनक् ॥ ४५ ॥
अत्रैवावसरे गुरुर्दिविषदां मन्ये द्विजेन्द्राहृणं
दारिद्र्यद्विमुखान्वयं दलयितुं सिंहं समभ्यागतः ।
श्रीनारायणभूपतेर्जिगमिषामाकर्ण्य गङ्गादयो
दानाम्बुव्ययशङ्कयेव सरितो गोदावरीमाश्रिताः ॥ ४६ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नगमत्कृतारिविजयः सर्गोऽयमेकादशः ॥ ४७ ॥

इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचिचुम्बितचरणसरोज-मयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्र-विरचिते राष्ट्रौढवंशे महाकाव्ये वैरिवीरपरिभवो नाम एकादशः सर्गः ॥

---

## द्वादशः सर्गः ।

संसारहारिभुवनत्रयवर्त्तिनाना-
गङ्गादितीर्थपरिवारनिषेव्यमाणाम् ।
ब्रह्मादिदेवमुनिवृन्दविराजितीरां
गोदावरीमथ नृपो विदिदृक्षुरासीत् ॥ १ ॥

श्रीमत्प्रतापयुवराजमुदारवीर्यं
भूपालनाय विनिधाय मयूरशैले ।
श्रीमान्महीपतिरगाच्चतुरङ्गसेना-
मादाय नासिकपुरं सपुरन्ध्रिवर्गः ॥ २ ॥

तत्रान्तरे चतुरतादृशसार्थलोभा-
ल्लक्षं ययुः सकलदिग्भवतैर्थिकौघाः ।
एकः करोतु पदवीं परमां पुरस्ता-
त्प्रायस्तदीयगमनानुगतिः समग्रः ॥ ३ ॥

प्रौढप्रतापविशदीकृतमार्गवीथि-
र्नारायणः सकलवीरकिरीटहीरः ।
नानादिगायतनतैर्थिकसार्थमेनं
गोदावरीमनयदात्मकुटुम्बकल्पम् ॥ ४ ॥

सानन्दजानपदवृन्दमहोपहारै-
रुन्नम्रताम्रपटमण्डपमन्दिरैश्च ।
रम्याः पथि क्षितिपतेरभवन्निवासाः
श्रीमत्पुरोपवनराजिविहारसाराः ॥ ५ ॥
नीत्वैकरात्रमथ हस्तगिरौ पुरस्ता-
दुच्छन्नसौ दुरितकुञ्जरसिंहनादम् ।
दिग्विश्रुतः श्रुतिपथातिथिमातिथेयो
गङ्गाप्रवाहरवमादरवानकार्षीत् ॥ ६ ॥
नेत्रारविन्दजनुषः फलमुत्पलाढ्यां
गोदावरीमुभयतीरचरीमपश्यत् ।
उत्तीर्य चापि शिबिकासनतस्तदानी-
मष्टोत्तरं शतमसावकरोत्प्रणामान् ॥ ७ ॥
बद्धाञ्जलिः पुलकमण्डितगात्रयष्टि-
र्नारायणक्षितिपतिस्तटिनीमनौषीत् ।
कल्याणि गौतमि विमुक्तिपदावरोह-
निश्रेणि सप्तमुखि देवि सदा नमस्ते ॥ ८ ॥
संसारहारि सुखकारि सुधानुसारि
श्रीमन्मुरारिपदवारि निवारितारि ।
गोदावरीविमलवारि विपन्निवारि
श्रेयस्तनोतु मदनारिशिरोविहारि ॥ ९ ॥
नानाविधप्रचुरयोनिनिविष्टजन्तू-
नालोक्य जन्ममरणादिकदुःखदग्धान् ।
संसारदुस्तरमहार्णवमुत्तरीतुं
विश्वेश्वरेण कृतिना भुवि भावितासि ॥ १० ॥
इत्यादिकोमलपदावलिभिः स्तुवानः
पद्भ्यां व्रजन्मणिसुवर्णमयार्घपाणिः ।
श्रीभैरवक्षितिपुरन्दरनन्दनोऽसौ
गोदावरीतटभुवं रभसादविन्दत् ॥ ११ ॥

गोदावरीपरिसरे नयनाभिरामे
स्फारीकृतेषु परितः पटमण्डपेषु ।
भूमीपतिः शुचिमतिः सलिलावगाह-
सम्भारसम्भ्रममचीकरदादरेण ॥ १२ ॥

अत्रान्तरे परमसाहसिकप्रतीप-
भूपाधिकारिपुरुषः परतः समेत्य ।
निश्शेषदेशजनसङ्घमवेक्ष्य तुष्टः
प्रत्येककाञ्चनकरग्रहणोत्सुकोऽभूत् ॥ १३ ॥

तं दामनद्धनिखिलावयवं तुरुष्कं
प्राक्षेपयत्पयसि पार्श्वचरैरगाधे ।
नारायणः परमकारुणिकस्तदानी-
मग्राहयत्करममुष्य जलाकुलस्य ॥ १४ ॥

नारायणक्षितिपतेः सपदि प्रसादा-
दासाद्य मज्जनविधानविरोधमुक्तिम् ।
गोदावरीजलनिमज्जनतोऽपि सङ्घाः
संसारबन्धनविमुक्तिपटुत्वमापुः ॥ १५ ॥

आचार्यमार्यमथ मन्त्रविदः समग्रा-
नाहूय सर्वदिगुपागतभूमिदेवान् ।
राजा जितेन्द्रियचयः किल देशकालौ
स्मृत्वा यथाविधि निमज्जनमन्वतिष्ठत् ॥ १६ ॥

स्नानं विधाय परिधाय च धौतवस्त्रे
विद्वान्विधाय विधिवज्जपतर्पणादि ।
धन्यो वदान्यजनमौलिमणिर्हिरण्य-
श्राद्धं विधाय दशदानविधिं व्यधत्त ॥ १७ ॥

नारायणः कनकभूषितगोसहस्रं
मत्तेभवाजि(रथराजत)हेमभारान् ।
दासीः प्रभूतमहिषीरपि रत्नराजी
राजीवचारुनयनो व्यतरद्द्विजेभ्यः ॥ १८ ॥

विच्छिन्नभूसुरपरश्शतवृत्तिभूमी-
र्भूपो न केवलममुञ्चदहो तदानीम्।
किन्तु प्रभूतफलदाः स्वयमप्यपूर्वा-
स्तत्रादित द्विजगणाय सहस्रवृत्तीः ॥ १९ ॥

नारायणक्षितिपतिं प्रवदन्ति मन्दाः
कल्पद्रुमेण सदृशं कवयो मुधैव।
कल्पद्रुमः स खलु कल्पितमेव दत्ते
श्रीमानकल्पितमपि क्षितिनायकोऽसौ ॥ २० ॥

तस्मिन्धनं ददति भूभुजि दानशूरे
कस्यापि कर्णपदवीं न जगाम कर्णः।
पातालमूलमगमद्बलिभूमिपालः
सिन्धुं मुरारिरविशत्कमलां गृहीत्वा ॥ २१ ॥

एतेन सर्वधरणीसुरमण्डलेभ्यो
दानोद्भटेन विनिवारितमादरेण।
दारिद्र्यमाकलयति स्म नितान्तभीतं
नारायणक्षितिपतेरथमण्डलानि ॥ २२ ॥

दाता समस्तविदुषां न यथेष्टदाता
दाता यथेष्टमिह नैष समस्तदाता।
दाता यथेष्टमथ चापि समस्तदाता
नारायणो वसुमतीवलये स एकः ॥ २३ ॥

श्रीभैरवक्षितिपकेसरिनन्दनेन
दारिद्र्यदन्तिनि हते धरणीसुराणाम्।
तत्कुम्भमण्डलविदारणतूर्णनिर्य-
त्सत्कीर्त्तिमौक्तिकचयेन दिशो विरेजुः ॥ २४।

येषामुपोषणमभूदपि मक्षिकाणां
वंशावकाशवति धामनि भिक्षुकाणाम्।
नारायणक्षितिपदत्तसुवर्णटङ्कै-
स्तेषां गृहेषु विलुठन्ति सुमेरुकूटाः ॥ २५ ॥

नारायणक्षितिपतेरथ सुन्दरीणां
लक्ष्मीवतो हरिहरस्य च नन्दनस्य ।
....................................................
.................................................... ॥ २६ ॥

सम्पूज्य भूसुरगणानिति भूमिपालः
श्रीसुन्दरेश्वरकपालिमहेश्वरौ च ।
रुद्राभिषेकमुखषोडशपूजनाङ्गै-
र्धीमानपूपुजदुदारपदैः स्तुवानः ॥ २७ ॥

सानन्दवेदमयघोषविराजमान-
भूदेववृन्दपरिवारविशेषशाली ।
श्रीरामचन्द्रचरणाम्बुजदर्शनार्थं
नारायणः सपदि पञ्चवटीमयासीत् ॥ २८ ॥

वामे विदेहतनयां कलधौतगौरीं
सेवारसाङ्कमपि लक्ष्मणमन्यपार्श्वे ।
अग्रे कृताञ्जलिपुटं च समीरसूनुं
मध्ये स राघवमलोकयदभ्रनीलम् ॥ २९ ॥

सीताहनूमदनुजैः सहितस्य साक्षा-
त्पूजां यथा रघुपतेरकरोन्नरेन्द्रः ।
सा रत्नकाञ्चनमयी मनसाऽपि नूनं
केनापि कल्पयितुमत्र तथा न शक्या ॥ ३० ॥

इन्दीवरोदरसहोदरकान्तिपूरं
विश्वेश्वरं भुवनमण्डलकर्णपूरम् ।
नारायणक्षितिपतिर्मदनाभिरामं
श्रीराममस्तुत समस्तविपद्विरामम् ॥ ३१ ॥

अये राम ते नाम कं नाम लोकं पुनीते धुनी ते न पादोद्गतेव ।
अतो रामनामाभिधं तीर्थरत्नं चिरं मेऽस्तु नाथेति याचे भवन्तम् ॥ ३२ ॥

यस्य ब्रह्म मुखादजायत चतुर्विद्याविलासास्पदं
बाहुभ्यां भुवनैकपालनपरं क्षत्रं पवित्रं परम् ।

ऊरुभ्यां धनधान्यधारणमुखव्यापारभाजो विशः
शूद्राः सज्जनसेविनश्चरणतस्तं रामभद्रं भजे ॥ ३३ ॥
चित्ताच्चन्द्रश्चक्षुषश्चण्डरश्मिः श्रोत्राल्लोको वायुरग्निस्तु वक्त्रात् ।
नाभेरभ्रं शीर्षतो द्यौर्दिशो भूः पद्भ्यां जाता यस्य तं नौमि रामम् ॥३४॥
सकलभुवनपालं ताटकाशान्तिकालं
कनकनिभदुकूलं सौवभक्तानुकूलम् ।
दशवदनकरालं योगिचेतोमरालं
हृतकलिमलजालं राममालम्बयामः ॥ ३५ ॥
श्रेयःकल्मषजन्ममन्मथविपत्सम्पत्समाकर्षण-
क्षोभोच्चाटनमोहमारणवशीकारप्रकारक्षमम् ।
यागत्यागसमाधिदीक्षणपुरश्चर्यादिचर्यां विना
याचे त्वां रसना सदा जपतु मे रामेति मन्त्रेश्वरम् ॥ ३६ ॥
सन्तुष्टस्य तवाक्षिकोणकलया रङ्कोऽपि शक्रायते
रुष्टस्याथ तयैव देव कलये शक्रोऽपि रङ्कायते ।
तेन त्वामिदमेव मैथिलसुताप्राणेश्वर प्रार्थये
यन्मां दीनदयानिधान करुणादृष्ट्या समालोकय ॥ ३७ ॥
निशाविक्लवा चक्रवाकीव सूर्यं चकोरीव चन्द्रं मयूरीव मेघम् ।
समुद्दिश्य भो जानकीनायक त्वां मनोवृत्तिरानन्दमाविन्दते मे ॥३८॥
स्वामी कोपसमाकुलोऽपि सुतरां दासाय सीतापते
कृत्वा बन्धनमेकमेव कियता कालेन तं मुञ्चति ।
स्वामिन्पुत्रकलत्रमित्रधरणीगेहादिचिन्ताशतै-
र्बध्वा मामधुनाऽपि मोचनविधौ वार्त्ताऽपि नाधीयते ॥ ३९ ॥
श्रीरामनामपठनाय महान्तराये
जिह्वे सदा मधुरवस्तु ददामि तुभ्यम् ।
युद्धे जयाय गुडमाषघृतादिपिण्डैः
किं सैन्धवं न कुशलाः परिपालयन्ति ॥ ४० ॥
रसना मम रामनामसङ्गादिह गङ्गावदुपैतु पावनत्वम् ।
अविवादमयः सुवर्णभावं न किमु स्पर्शसमागमादुपैति ॥ ४१ ॥

रुचिरं तव नाम निर्मलं जपतां राम किमत्र दुष्करम् ।
इति वेद्मि तथापि हन्त मे हृदयं धावति यत्र कुत्रचित् ॥ ४२ ॥
रघुनाथ विचित्रमत्र किं परिपूर्णा करुणाऽस्ति यन्मयि ।
अपराधपरम्परावृतं न हि माता समुपेक्षते सुतम् ॥ ४३ ॥
प्राचीनदोषोद्भवदुःखमन्तं भोगादुपैतीति यदुक्तमस्ति ।
तत्सावकाशं रघुवीर तत्र यत्र त्वदीयो न कृपाकटाक्षः ॥ ४४ ॥
नार्थजातमिदमादरणीयं चित्तमेतदमलीकरणीयम् ।
रामनाम शरणीकरणीयं लीलया भवजलं तरणीयम् ॥ ४५ ॥

नानाराक्षसपाटनैकचतुरं ब्रह्मादिभिर्वन्दितं
नीलाम्भोजदलद्युतिं च विमलं पीताम्बरं सुन्दरम् ।
विश्वाधीश्वरमेकमादिपुरुषं राजीवनेत्रं मुदा
श्रीरामं समुपास्महे रघुकुलालङ्कारचूडामणिम् ॥ ४६ ॥
राम चेन्मम ददासि न सङ्गं तं वियोगमपि राघव देहि ।
येन सा जनकराजकुमारी राम राम रमणेति बभाण ॥ ४७ ॥

तूष्णीं स्थितासि किमु जानकि हन्त मात-
र्जानासि किं न रघुवीरवियोगखेदम् ।
तत्त्वं कथं कथयसीति न राममेनं
दीनं समानय विभो निजपादपद्मम् ॥ ४८ ॥
सौमित्रे त्रिभुवनसार्वभौमकर्णे
विज्ञप्तिं कथय ममापराधिनोऽपि ।
बालत्वाल्ललितभवद्वचोविनोदैः
सानन्दो रघुपतिराशु धास्यतीमाम् ॥ ४९ ॥

समीरसूनो वचनं मदीयं विज्ञाय विज्ञापय राघवाय ।
परोपकारैकफलाय नूनं सतां महाराजगृहे निवासः ॥ ५० ॥
सुग्रीवेण पुरा प्रसन्नमनसे रामाय संप्रार्थिता
किष्किन्धाऽथ विभीषणेन कृतिना लङ्का महीमण्डनम् ।
दातुं किञ्चन पृच्छतेऽपि भवता नाद्यापि तद्याचितं
तत्संप्रार्थय मारुते मयि कृपापाङ्गावलोकाङ्कुरम् ॥ ५१ ॥

स्तुतिं त्वदीयां कियतीं विधाय स्वामिन्मया हन्त विरम्यते यत् ।
अमादशक्तेरथवा तदेतन्नेयत्तया राघव ते गुणानाम् ॥ ५२ ॥
समर्प्य रम्यस्तवपूर्वमेवं पुष्पाञ्जलिं रामपदारविन्दे ।
पुनर्यमाम्बातनयो मनस्वी गोदावरीतीरनिवासमागात् ॥ ५३ ॥
हैयङ्गवीनस्नपितानि तीर्थश्राद्धाङ्गभूतानि रसोत्तराणि ।
अन्नानि लक्षावधि भूमिदेवानभोजयद्भूमिपतिस्तदानीम् ॥ ५४ ॥
गोदावरीरोधसि सप्तरात्रं विनीय संप्रस्थितसैन्यभारः ।
धरावलारातिरवाप्य देवस्थानाभिधग्राममतिष्ठदीषत् ॥ ५५ ॥
जामातरं मङ्गलजित्प्रवीरं दत्त्वा समं शार्ङ्गधरं द्विजं च ।
तत्रायमन्तःपुरपङ्कजाक्षीः प्रास्थापयत्केकिगिरिं ससैन्याः ॥ ५६ ॥
द्विषां विनेता हरितां विजेता जवारिराज्यग्रहणोत्सुकोऽसौ ।
समस्तसेनासहितस्तदानीं महीपतिः पीठपुरं समेतः ॥ ५७ ॥
महापटागारमस्व(?था)स्य तस्य व्यधात्तडागस्य तटोपकण्ठे ।
उत्फुल्लपङ्केरुहलोचनैर्यो वीक्षांबभूवेव नरेन्द्रमेनम् ॥ ५८ ॥
मनोरमं केवलधर्ममूर्त्तिं राजानमाजानुभुजं निरीक्ष्य ।
यो विस्मयादम्बुजकोशदम्भान्नितान्तरोमाञ्चितमूर्त्तिरासीत् ॥ ५९ ॥
स यावदभ्येति महीमहेन्द्रः सेनाचरैस्तावदहो पुरोगैः ।
सर्वा जवारिक्षितिनायकस्य सौराज्यलक्ष्मीरचिराद्लुण्ठि ॥ ६० ॥
मुखे तृणं कण्ठतटे कुठारं कृत्वा जवारिक्षितिपः सकम्पः ।
दयासमुद्रं शरणं शरण्यं नारायणं भूपतिमाजगाम ॥ ६१ ॥
चिरार्जितं रत्नसुवर्णराशिमुत्तुङ्गमातङ्गतुरङ्गसङ्घान् ।
राज्यादुपानीय जवारिराजो नरेन्द्रपादाम्बुजयोः पपात ॥ ६२ ॥
कियन्त्यपि ग्रामपुराणि तूर्णं प्रदाय नारायणपार्थिवाय ।
कृताञ्जलिः किङ्करतावलम्बी जवारिराज्यं स नृपो ययाचे ॥ ६३ ॥
एवं जवारिक्षितिपं क्षणेन स्वसेवकीकृत्य विशालकीर्त्तिः ।
रामाभिधानं नगरं नरेन्द्रः श्रीरामदेवस्य विजेतुमैच्छत् ॥ ६४ ॥
स रामनृपतिः समाजिगमिषाममुष्य प्रभो-
र्जवारिधरणीपतेरपि निशम्य वार्त्तामिमाम् ।

स्वराज्यहितहेतवे सपदि दण्डदानं शिवं
भवेदिति विचारयन्स्वयमियाय नारायणम् ॥ ६५ ॥

श्रीरामनामनृपतेर्गजवाजिराजी-
मादाय पेण्डवलनामगिरिं स देशम् ।
सानन्दमागमदुदारयशास्तदानीं
नारायणक्षितिपतिर्निजराजधानीम् ॥ ६६ ॥

अस्य क्षोणिपतेः प्रतापशिखिनो निश्शेषमेधायते
शत्रूणां पटलं तदीयमयशो जानामि धूमायते ।
मार्तण्डांशुलसत्कृपाणलतिका ज्वालाकलापायते
दारिद्र्यप्रसरः समस्तविदुषां सद्यः पतङ्गायते ॥ ६७ ॥

हस्ताग्रेण सुरद्रुमाग्रकुसुमस्तोमावचायेच्छया
दिक्सारङ्गविलोचनास्तनघनश्रीखण्डलेपायिताम् ।
सोल्लासं दिवि यस्य कीर्त्तिमतुलां गायन्ति देवाङ्गनाः
सोऽयं दातृशिरोमणिर्विजयते श्रीशाहनारायणः ॥ ६८ ॥

श्रीनारायणशाहकीर्त्तिमतुलां लोकत्रयव्यापिनीं
कैलासेन महीभृता तुलयितुं धाताऽभवत्सोद्यमः ।
तत्पूर्त्यै गिरिशं ततः शशिकलां पश्चात्तु मन्दाकिनी-
माधायाप्यतुलेति नाभिनलिनं विष्णोर्विवेश ह्रिया ॥ ६९ ॥

धातः किं ननु तुल्यते हिमवता सार्द्धं यशः कस्य वा
श्रीनारायणभूपतेर्बत भवान्व्यक्तोऽधुना वैदिकः ।
कस्माद्व्याप जगत्रयीमिदमसौ कुत्रेति न ज्ञायते
धाता बालसरस्वतीवचनतो भग्नोद्यमोऽभूदतः ॥ ७० ॥

मार्गे पृच्छन्ति पान्थानिति पुलिनपतत्कूजितैः सिन्धवोऽयं
श्रीमन्नारायणक्ष्मापतिरिह कुशली शास्ति विश्वम्भरां किम् ।
यस्योद्यत्खड्गधाराहतरिपुतरुणीनेत्रपानीयपूर-
स्फारीभूतप्रवाहाश्चिरमिह जलधेः सङ्गसौख्यं भजामः ॥ ७१ ॥

श्रीनारायणशाहसैन्धवखुरक्षुण्णां क्षितिं मूर्छितां
संवीक्ष्य प्रतिभूपतिप्रियतमाः सिञ्चन्ति नेत्राम्बुभिः ।

लीलाकम्पितकर्णतालपवनैः संवीजयन्ति द्विपा
जानीमो दिवि धूलिधोरणिरियं छायार्थमुत्सर्पति ॥ ७२ ॥
वाटी विष्टपमण्डलीह विततो जागर्त्ति कीर्त्तिद्रुम-
स्तद्बीजं बलमालवालवलयं तस्यैष नारायणः ।
दानाम्भः स बिभर्त्ति तस्य जलधिः कूपः पयोदा घटी-
यन्त्रं तत्र चकास्ति तस्य घटनाकारी च वर्षाऋतुः ॥ ७३ ॥
नाकारं शेषनागात्क्षितिभरसहनाद्धीरवीरत्वयोगा-
द्राकारं रामचन्द्रादविनतदमनादेव याम्यं यकारम् ।
जाने कर्णाण्णकारं परमवितरणादेवमादाय वर्णा-
न्विष्णोरङ्गानुरूपां पटुरदित विधिस्तस्य नारायणाख्याम् ॥ ७४ ॥
नवोढवनिताकुचैरिव सुदुर्द्धरैस्तत्क्षणं
खिलीकृतमनोजवैः प्रणयिनीकटाक्षैरिव ।
तदीयतुरगैः क्षणादियमकारि वाराङ्गना-
धनागममनोरथैरिव वसुन्धरा गोष्पदम् ॥ ७५ ॥
सोऽयं कार्त्तिकपर्वरात्रिरमणस्फारद्यशोमण्डलः
स्पष्टज्येष्ठकठोरघर्मकिरणप्रौढप्रतापोदयः ।
श्रीमद्भैरवभूपुरन्दरकुलालङ्कारचूडामणिः
कल्याणं कुरुते स भूमिवलये भूदेवचिन्तामणिः ॥ ७६ ॥
श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये(तीर्थनिषेवणादिविषयस्सर्गोऽगमद्द्वादशः) ॥ ७७ ॥

इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोज-
मयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्र-
विरचिते राष्ट्रौढवंशे महाकाव्ये गोदावरीयात्राप्रसङ्गो नाम
द्वादशः सर्गः ॥

---

## त्रयोदशः सर्गः ।

अथ प्रजापालनलब्धकीर्त्तिर्महारथो मन्मथरम्यमूर्त्तिः ।
राज्ञां स्वधर्मोऽयमिति क्षितीशः स्वच्छन्दमैच्छन्मृगयाविलासम् ॥ १ ॥
सवागुराचित्रकसारमेयश्येनावलीजालधरैरनेकैः ।
बलैः परीतः परितः प्रतीतः पतिः प्रजानामगमद्यशस्वी ॥ २ ॥
स खामलाह्लानपुरोपकण्ठे दूष्याणि दत्वा विततज्यधन्वा ।
शार्दूलसारङ्गमहावराहमृगादिकीर्णान्यविशद्वनानि ॥ ३ ॥
वल्लीषु संवेशितकोमलाङ्ग्यो मधुव्रतारोपितनेत्रशोभाः ।
मनोभिरामं तुरगाधिरूढं व्यलोकयन्काननदेवतास्तम् ॥ ४ ॥
उत्तस्थुषां पल्वलपङ्कमध्यात्पर्यस्तमुस्ताकवलं नरेन्द्रः ।
प्रकाशमार्द्रैः पदसन्निवेशैरबोधि मार्गं वनसूकराणाम् ॥ ५ ॥
आकर्णमाकृष्टसबाणधन्वा विचक्षणश्चञ्चललक्ष्यपाते ।
क्षणादविध्यन्नृपतिः प्रकोपात्सघुर्घुरं वन्यवराहयूथम् ॥ ६ ॥
एभिः स्वदंष्ट्रादलिताः कियन्तो दुरात्मभिः पान्थजना निगीर्णाः ।
इतीव कोपेन नृपेण नीताः कृतान्तदंष्ट्राकुहरं वराहाः ॥ ७ ॥
अमीमदन्तःपुरसुन्दरीणां विलोचनस्पर्द्धनवृद्धगर्वाः ।
इतीव कोपाकलितः कुरङ्गान्नृपः सपत्राकुरुते स्म सद्यः ॥ ८ ॥
जपादिकाले जगतीसुराणामतीव चर्मासनमर्हमस्य ।
शार्दूलयूथं हतवानतोऽसौ सतां तु हिंसा हि परोपकारे ॥ ९ ॥
अधिज्यधन्वा जगतो नियन्ता पापर्द्धिकौतूहलकैतवेन ।
अन्यानपि क्षोणिपतिः प्रचण्डानदण्डयत्काननदुष्टसत्त्वान् ॥ १० ॥
मयूरभूमीधरनामगन्धान्नायं निहन्ति स्म मयूरयूनः ।
कृपालयः प्रत्युत पालनाय स तानुदारानुररीकरोति ॥ ११ ॥
चमूरुशार्दूलमुखान्कुरङ्गाँल्लीलाविहङ्गान् शुकसारिकादीन् ।
महीपतिर्जीवत एव धृत्वा पटीनिवासानगमत्ससैन्यः ॥ १२ ॥
ततो हठादग्रिमनन्दनेन श्रीतानदासेन गृहीतराज्यः ।
यस्मादभून्मङ्गलजित्कुमारः स माङ्गदेवः क्षितिपं जगाद ॥ १३ ॥

उद्बुद्धमद्भाग्यभरप्रभावादुपागतस्त्वं मृगयामिषेण ।
श्रीराघवो गौतमदारदैवान्मखच्छलेनेव वनान्तभूमिम् ॥ १४ ॥
श्रीतानदासेन बलाद्गृहीतं श्रीवासुदेवाख्यपुरं विजित्य ।
तत्राभिषिञ्च क्षितिपालमौले जामातरं मुञ्जलजित्प्रवीरम् ॥१५॥
तद्गाङ्गदेवस्य वचो निशम्य प्रफुल्लरक्तोत्पललोचनश्रीः ।
नारायणक्षोणिपतिस्तदानीं सवाहिनीको विजयोत्सुकोऽगात् ॥ १६ ॥
घोरैः कुठारैः करिणां च दन्तैर्भग्नेषु नानाविधभूरुहेषु ।
असौ विहङ्गैरपि दुर्गमाणि व्यधात्प्रकाशानि महावनानि ॥ १७॥
तैरेवकाष्ठैरुपलैश्च लोष्टैरापूर्य पुर्याः परिखां गभीराम् ।
सा वासुदेवाभिधराजधानीमनीकिनी तस्य मुदा विवेश ॥ १८ ॥
पुरीमिमां पातितभूरिवीरैः पशूपहारैरिव पूजयित्वा ।
सा तानदासेन चिरप्रणीतां सौराज्यलक्ष्मीमखिलामलुण्ठत् ॥ १९ ॥
सम्बन्धिने दातुमिवाग्निसाक्षि नरेश्वरस्तां नगरीमधाक्षीत् ।
बभार या भर्गविलोचनाग्निजाज्वल्यमानत्रिपुरस्य शोभाम् ॥२०॥
विरोधिनः कीर्त्तिमिव क्षणात्तां भस्मावशेषां नगरीं विधाय ।
नृपो निवासाय नितान्तमाराचाम्पेयवाटीं नगरीं समेतः ॥ २१ ॥
अत्रान्तरे भैरवभूपसूनुप्रतापसन्तापितचित्तवृत्तिः ।
जीवं समादाय स तानदासो वनाद्वनान्तेषु पलायते स्म ॥ २२ ॥
श्रीगोमुखे तस्य विहारगेहं गत्वा मयूराचलमौलिसिंहः ।
नालीकशय्यासनडिण्डिमादिप्रभूतवस्तुप्रकरानहार्षीत् ॥ २३ ॥
श्रीवासुदेवाख्यपुरीं विशालां पुनर्नवीनां विरचय्य राजा ।
आनन्दिताऽशेषजनामकार्षीन्मनोरमां मुञ्जलजित्करस्थाम् ॥२४॥
तस्मिन्पुरे जाग्रति राजसिंहे वीरेश्वरे मुञ्जलजिन्मनस्वी ।
दिगन्तयातस्य निजाग्रजस्य स्थाने तदाऽभूल्लिटि भूरिवास्तेः ॥२५॥
श्रीगाङ्गदेवस्य पितुः समग्रस्त्वया निदेशः परिपालनीयः ।
नारायणक्षोणिपतेरितीमां गिरं स वीरः शिरसा बभार ॥ २६ ॥

श्रीवासुदेवाख्यपुराधिराज्ये नियुज्य जामातरमित्युदारम् ।
तत्रैव नीत्वा कतिचिद्दिनानि प्रस्थातुमैच्छच्छिखिभूधरेन्द्रः ॥ २७॥

ततो मयूराचलराजधानीं संप्राप्य नारायणसार्वभौमः ।
चिरस्य सिंहासनसन्निविष्टो नितान्तमानन्दयति स्म लोकान्॥२८॥

ततः कदाचिद्बुरहानशाहक्षोणीभुजा दक्षिणदेशलब्ध्यै ।
सम्प्रार्थितो गालनपर्वतस्य वटाभिधग्राममगाददूरे ॥ २९ ॥

सम्प्रेष्य तूर्णं बुरहानशाहसाहाय्यहेतोर्निजमर्द्धसैन्यम् ।
ग्रामं तमेव स्वयमध्यतिष्ठत्स रुद्धभूरिप्रतिवीरसैन्यः ॥ ३० ॥

नारायणक्षोणिपतेरुदाराश्चमूचरास्तत्र निहत्य वीरान् ।
अथ क्षणाद्दक्षिणदेशराज्ये बुर्हाणशाहं नृपमभ्यषिञ्चत् ॥ ३१ ॥

तत्रास्य वीरैर्यदकारि सोऽयं नारायणक्षोणिपतेः प्रतापः ।
प्रातः समन्तादरुणस्तमिस्रं निहन्ति भानोर्महिमा स नूनम् ॥ ३२॥

अनेकमातङ्गतुरङ्गरत्नसुवर्णवस्त्रादिकवस्तुजातम् ।
नारायणक्ष्मापतयेऽनुरागात्संप्रेषयामास बुर्हाणशाहः ॥ ३३ ॥

बुर्हाणशाहक्षितिनायकेन दत्तानि सानन्दमुपायनानि ।
समीपमानीय चमूचरास्ते नारायणक्ष्मारमणं प्रणेमुः ॥ ३४ ॥

नारायणक्षोणिपतिस्तदानीं जगत्त्रयख्यातभुजप्रतापः ।
अपेतभीर्गालनशैलराजपर्यन्तनिश्शेषपुराण्यलुण्ठत् ॥ ३५ ॥

महीपतिः स्यन्दनहस्तिवामीमहोक्षदासेरकहारितार्थः ।
रिपोर्मयूराचलराजधानीमागत्य सिंहासनमध्यतिष्ठत् ॥ ३६ ॥

दिङ्नारीकर्णपूरीकृतविमलयशोमण्डलीपुण्डरीकः
संधीभूतांशमाला मनुजपतिरयं राजते नः पृथिव्याम् ।
एवं सम्भाव्य नारायणधरणिपतिप्राज्यसाम्राज्यभूमौ
कल्याणं सानुरागाः प्रतिदिनमधिकं तेनिरे लोकपालाः ॥ ३७ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।

भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्मृगयाविहाररसिको रामेन्दुसर्गोऽगमत् ॥ ३८ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोजमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये मृगयाविहारवासुदेवाख्यनगरविजयो नाम त्रयोदशः सर्गः ॥

---

## चतुर्दशः सर्गः ।

नारायणक्षितिपतेः कुसुमावलीभि-
र्हर्षप्रकर्षमिव कर्तुमनास्तदानीम् ।
चूताङ्कुरे करतले कलयन्प्रसूनं
श्रीमान्वसन्तसमयः समुपाजगाम ॥ १ ॥

लवङ्गीमालिङ्गन्सरसमभिचुम्बञ्जलजिनीं
मतल्लीमातन्वन्नवहसितलीलाविलसिताम् ।
चिरं कुर्वंश्चञ्चत्पुलकंकु(क)लितां केतकलतां
भजन्वल्लीमल्लीं मलयपवनो मन्दमवहत् ॥ २ ॥

अथ मदनमहीपतिर्वसन्तं
सहचरमेनमवाप्य जातहर्षः ।
मुखरितपिकडिण्डिमः समन्ता-
त्सकलजगद्विजयाय संप्रतस्थे ॥ ३ ॥

कुसुमभरनमन्तः पल्लवैरुल्लसन्तः
कति कति न वसन्ते पादपाः सन्ति कान्ते ।
मधुरतरमरन्दे मञ्जुगुञ्जन्मिलिन्दे
तदपि गुणविशाले कापि शोभा रसाले ॥ ४ ॥

कति न सन्ति मधौ कुसुमद्रुमाः किसलयद्युतिनिर्जितविद्रुमाः ।
कलयते स्म रसाललता परं नियमिनोऽपि मनो वनितापरम् ॥ ५ ॥

जानीमहे नीरजलोचनानां मानं निहन्तुं मदनो जगाम ।
भृङ्गी यतो गायति वल्लिबाला प्रसूनजालान्परितः करोति ॥ ६ ॥
वनस्थलीं कैरवकोरकस्तनीं मधुव्रताक्षीं सरसीरुहाननाम् ।
परिस्फुरत्पल्लवपाणिशालिनीं प्रसूनहासां सुरभिर्व्यभूषयत् ॥ ७ ॥
कन्दर्पमार्तण्डमरीचिजालज्वालाकलापेन करालिताङ्गः ।
मनस्विनीमानसविद्यमानं मधुः पपौ मानपयः प्रतीमः ॥ ८ ॥
किंशुकाग्निशकलादधि धूमस्तोम एव किमु भृङ्गशरीरः ।
अन्यथा किमिति पान्थवधूनामश्रुपाटलविलोचनलक्ष्मीः ॥ ९ ॥
किंशुकीयकुसुमालिपावके माधवे खलु समागते सति ।
सोमयागमिव कर्तुमुद्यतः कोकिलः प्रतिदिनं मुदाऽपठत् ॥ १० ॥
मदनस्य यशो भृङ्गा जगदुः कलकूजितैः ।
मल्लीवल्ली वितनुते कलिकापुलकाङ्कुरान् ॥ ११ ॥
शमनवाहनकासरकातरत्वरितससिसमूह इवांशुमान् ।
अगमदुज्झितदक्षिणदिक्पथः समुचितामलकाधिपतेर्दिशम् ॥ १२ ॥
मेषमाप सहस्रांशुर्गान्धारस्वरभङ्गिभिः ।
पञ्चबाणयशोगानसकौतुकमना इव ॥ १३ ॥
बिभिदे स्मरसिंहेन कान्ताकोपगजः किमु ।
पाटलाकलिकाः शङ्के तस्य शोणितविप्रुषः ॥ १४ ॥
वसन्तकालो मदनस्य गेहं दत्तः प्रदीपोऽत्र नवं पलाशम् ।
शिखाञ्जनं तस्य मधुव्रताली पतङ्गमाला जनधैर्यपाली ॥ १५ ॥
न जन्मकालो न च साधुसङ्गमः कुलं गुणानां परमं निदानम् ।
मल्लीसमीपे सुरभौ च जातं सौगन्ध्यमाधत्त न कर्णिकारम् ॥ १६ ॥
अत्रान्तरे रम्यवसन्तलक्ष्मीमहोत्सवालोकनकौतुकी सः ।
सानन्दमन्तःपुरसुन्दरीभिस्ताभिः समं निष्कुटमभ्युपेतः ॥ १७ ॥
मल्लीमतल्लीकुसुमालिशाली यासां विशालः कबरीकलापः ।
निगीर्णशीतांशुकलाकलापस्तमःपरीवार इव व्यराजत् ॥ १८ ॥
यासां प्रसूनाकुलकेशपाशे सिन्दूररेखा परभागमागात् ।
भागीरथीभानुसुताप्रवाहसङ्गे समायातसरस्वतीव ॥ १९ ॥

अर्द्धेन्दुघाटीकरयल्ललाटः सौभाग्यलीलालिपिहेमपट्टः ।
जानामि यत्कर्णकुटी कुटीरः श्रीजानकीराघवकेलिसारः ॥ २० ॥
नारायणक्षोणिपतेरजेयं मनो विजेतुं नु कटाक्षबाणैः ।
रतेरनङ्गस्य च कार्मुके किं यासां भ्रुवावुल्लसतः सलीले ॥ २१ ॥
जानामि याः काञ्चनकल्पवल्लीः समाश्रितौ लोचनखञ्जनौ तु ।
याभ्यां मुखाम्भोरुहमण्डलोऽपि मीनं गतश्चन्द्र इव व्यराजत् ॥२२॥
यासां स्वरोज्जीवनसौधकुण्डे विलोचने कज्जलपङ्करेखा ।
सरोजसौरभ्यनितान्तलुब्धद्विरेफमालेव समुल्ललास ॥ २३ ॥
यन्नासिकाकान्तितिरस्कृतानि तिलप्रसूनानि वनं श्रितानि ।
मुखेन यासां विजितः सुधांशुः कृतास्पदः श्यामिकयाऽधुनापि॥२४॥
आदाय यासां विजितात्सुधांशोः सुधाभिरापूरि मुखारविन्दम् ।
एकत्र यन्नीचकलः कृशीयानालोक्यते प्रातिपदोऽयमिन्दुः ॥ २५ ॥
यदीयदन्तावलिनिर्जितानि मग्नानि सिन्धौ नवमौक्तिकानि ।
क्व पल्लवे पादपरागलेशो बिम्बेऽधरच्छायलवोऽपि यासाम् ॥ २६ ॥
यदीयबिम्बाधरकान्तिपूरैर्मुक्तामणिः पाटलदीप्तिरासीत् ।
सोल्लासनासाशुकपोतचञ्चुसमुल्लसद्दाडिमबीजकल्पः ॥ २७ ॥
यत्कण्ठशोभाविजितः स कम्बुः श्रीवासुदेवं भजतेऽधुनापि ।
वीणापि यासां स्वरखर्वगर्वा वाग्देवताराधनमातनोति ॥ २८ ॥
भुजैर्मृणालैरिव कण्ठनालैः(?)करैः सरोजैरिव सानुरागैः ।
नखैः प्रसूनैरिव या महीभृद्भानोः सरोजिन्य इव व्यराजन् ॥२९॥
चित्तेऽवकाशं रमणाय दातुं यासां स्तनौ किं बहिरभ्युपेतौ ।
तारुण्यमायातमवेक्ष्य चाग्रे चिरं समुत्थानसमुन्नतौ किम् ॥३०॥
यासां कुचौ चूचकपाचिचूडप्रासादभूतौ रतिकामयोः किम् ।
नाभीतलावालजरोमवल्लीप्रसूनगुच्छाविव भृङ्गलीढौ ॥ ३१ ॥
वितानवेदीहरिणाधिराजदेवाङ्गनानामपि मध्यभागः ।
इति त्रयीयं विजितेति यासां मध्यो वलीभिस्तिसृभिः शशंस ॥ ३२ ॥
याः कामदेवस्य लसन्नितम्बबिम्बैकचक्रो रथ एव मन्ये ।
आरुह्य यत्रैष विचित्रसूर्यो हर्षेण नक्तंदिवमभ्युदीते ॥ ३३ ॥

यदूरुशोभाविजिता नितान्तं बिभर्त्ति रम्भाऽभिभवेन शैत्यम् ।
सनूपुरैर्यच्चरणैर्जितानि सहंसपद्मानि वनं श्रयन्ते ॥ ३४ ॥
याभिर्महीमण्डलभासिनीभिः प्रसाधिताभिर्निजकामिनीभिः ।
प्रकाममभासत भूमिपालस्तारावलीभिः सकलः शशीव ॥ ३५ ॥
कुसुमशरविलासजैत्रमूर्तिं नरपतिमत्र कुरङ्गशावनेत्राः ।
घनमदमदनोदयादुदञ्चत्पुलककपोलमलोकयन्नपाङ्गैः ॥ ३६ ॥

लीलावलम्बितपरस्परपाणिपद्माः
कामालसाः कमलकोमलकान्तयस्ताः ।
आलीविनोदवचनोद्भवमन्दहासाः
कामप्यनङ्गमधुरामलभन्त शोभाम् ॥ ३७ ॥

ततो नरेन्द्रोऽपि विनोदसुन्दरो दरोदितापाङ्गतरङ्गरिङ्गणैः ।
अनङ्गसंरङ्गदपाङ्गमङ्गनाजनं घनानन्दमयं व्यलोकयत् ॥ ३८ ॥
ताः प्रिये मदनसुन्दरे रमामन्दिरे तरलमानसैः स्थिताः ।
भूतले तु कलये कलेवरैः केवलं कमललोचनाः स्थिताः ॥ ३९ ॥
उत्तुङ्गे कुचतटयोरतीव निम्ने मध्ये तु स्फुटतरमुन्नते नितम्बे ।
भूभर्त्तुः स्खलति मनः स्म वल्लभाङ्गे धीराः किं खलु विषमेषु न स्खलन्ति ॥ ४० ॥

भूरिभूषणविभूषिताः स्फुरत्पाणयो विलसदंशुकाञ्चलाः ।
तत्र राजवनिता विरेजिरे जङ्गमाः कुसुमिता लता इव ॥ ४१ ॥
अथमत्तचकोरचारुनेत्रा परिणेत्रा सहिताः स्फुरद्विहाराः ।
कुसुमावचयाय ताश्चिराय प्रतिवल्लि प्रतिपादपं विचेरुः ॥ ४२ ॥
मदमन्दमतङ्गजमन्दचरः कुसुमाकुलकेशकलापभरः ।
कलकङ्कणनूपुरनादकरः सविलासमियाय वधूनिकरः ॥ ४३ ॥
मन्दमन्दपरिधूतकदम्बः कम्पचापलकरो वनवायुः ।
कामसायकविमोचनजन्मा सुन्दरीभिरविवादममानि ॥ ४४ ॥
पश्यति प्रियतमे रमणीनां प्रस्फुरत्तरलहारमणीनाम् ।
उत्तरोत्तरविचित्रचरित्रं तत्र चेष्टितमतीव दिदीपे ॥ ४५ ॥

गतिं विना स्थातुमशक्यमेव गतौ पुनः स्यादभिमानभङ्गः ।
सखीसमूहादिति काऽपि नारी नारायणं गन्तुमगन्तुमैच्छत् ॥४६॥
काऽपि केलिकनकोत्पलकोशं निर्दयं करतलेन ममर्द ।
काऽपि चम्पकदलं चपलाक्षी लीलया नखमुखेन लिलेख ॥४७॥
विलासमन्दं वदनारविन्दं करारविन्दे विनिधाय काचित् ।
नारायणं रम्यमुखारविन्दं चित्तारविन्दे वनिता निदध्यौ ॥ ४८ ॥
सुव्यक्तभास्वत्कुचकुम्भभारा वल्लीव पुष्पस्तबकाभिरामा ।
वलद्वलीभङ्गमलीकमन्या बाला तमालं द्रुतमाललम्बे ॥ ४९ ॥
काऽपि कुन्तलकलापबन्धनच्छद्मनोन्नमितपाणिपल्लवा ।
किञ्चिदेव कुचकुम्भमण्डलप्रान्तभागकलिकामभासयत् ॥ ५० ॥
किञ्चित्समालोकितसस्मितालो घर्माम्बुसङ्कीर्णकपोलपाली ।
काऽपि त्रपानम्रमुखी नवोढा वोढारमालोक्य चिरं चकम्पे ॥५१॥
अवोचत सखीमिदं चपललोचना काचन
प्रमोदभरनिर्भरे किमपि पार्थिवे शृण्वति ।
पुरा परमगौरवं मयि बभूव भूमीपते-
र्न वेद्मि सखि विद्यते किमु न विद्यते साम्प्रतम् ॥ ५२ ॥
मुग्धेऽपराद्धममुना किमु ते यदेनं
भ्रूचापविद्धुतकटाक्षशरैर्निहंसि ।
सख्येति वाक्यमुदिता परिहासपूर्वं
काचिन्निशाकरमुखी विमुखीबभूव ॥ ५३ ॥
नायक त्वमसि नैकनायिकः सा त्वदेकशरणा कृशोदरी ।
तेन तद्विगणनां विधेहि मा स्वाश्रितैककरुणा हि सूरयः ॥ ५४ ॥
अन्तराललवशङ्कया यया चन्दनं कुचतटे न चर्चितम् ।
कान्त किं नु मकरीव वारिणः सा तवातिविरहं सहिष्यते ॥५५॥
किञ्च पञ्चविशिखोऽपि पञ्चभिः सायकैरिह तनूकरोति ताम् ।
अभ्युपेत्य पतिमित्थमुच्यतां काचिदित्यनुचरीं समादिशत् ॥५६॥
बालामेवमदर्शयत्प्रियसखी तस्मै नृप प्रेक्ष्यतां
यन्निश्शेषकलाविलासिनि कलानाथे समुन्मीलति ।

ध्वान्तं भूरि विजृम्भते विकसति स्वैरं सरोजावली
पीनं माद्यति चक्रवाकयुगलं संबाधसंयोगतः ॥ ५७ ॥

नारायणक्षितिभृता स्वयमेव दत्तां
मालां विलोक्य ललनाकुचकुम्भयुग्मे ।
भारो बभूव कनकाभरणं परस्याः
स्त्रीणां प्रियप्रणय एव हि भूरिभूषा ॥ ५८ ॥

लसन्मालतीमालिकां कण्ठदेशे नवालक्तरागं च बिम्बाधरोष्ठे ।
कुचे चन्दनं वीक्ष्य काचित्सपत्न्याः प्रिये सापराधेऽपि योषा तुतोष॥५९

आरामशोभामवलोकयन्त्या वसन्तलक्ष्म्याश्चरणाम्बुजोत्थान् ।
लाक्षानुरागानिव नीरजाक्ष्यो बालप्रवालान्ददृशुर्लतासु ॥ ६० ॥

वधूजने चिन्वति पुष्पमालां भयाकुलाः षट्पदपायिकौघाः ।
आरामपाला इव कामराजं कोलाहलैर्जागरयाम्बभूवुः ॥ ६१ ॥

पुष्पाद्यावचयं मधुर्वनपतिश्चाम्पेयपुष्पच्छला-
त्कन्दर्पक्षितिपाय किं कलयितुं तेने दिवादीपिकाः ।
कामोप्येनमुवाच कोकिलरवैः पश्याधुनैव प्रिया-
भ्रूचापास्तकटाक्षमार्गणगणैर्जेष्यामि नारायणम् ॥ ६२ ॥

निर्विराममनुरागसम्पदामास्पदानि मृगशावलोचनाः ।
गन्धलेशरहितानि कर्णिकाः कर्णिकारकुसुमानि चक्रिरे ॥ ६३ ॥

नरपतिवनितास्ततोविरेमुश्चिरकुसुमावचयेन भिन्नगात्राः ।
सहजमपि मदालसा युवत्यः किमुत वनान्तविहारखेदभाजः ॥६४॥

आरादारामवापीविहरणकुतुकी केतकीगन्धबन्धु-
र्मन्दव्याधूतनीलोत्पलदलमुकुलो मालतीधूलिमाली ।
तासामारोहपीनस्तनवहनघनस्वेदविच्छेदहेतुः
केलीमाकन्दवीथीविपणिमभि ववौ दाक्षिणात्यः समीरः ॥६५॥

मदकलसहकारालम्बिरोलम्बगुञ्जा-
रवपिककुलचञ्चत्पञ्चमैः संप्रकीर्त्त्य ।
कुसुमभरविकासैरस्य भूपस्य कीर्त्ती-
र्दिशि दिशि च विकीर्य द्राग्वसन्तः प्रतस्थे ॥ ६६ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्मधुपुष्परागरसिको मन्वंकसर्गोऽगमत् ॥ ६७ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचिचुम्बितचरणसरो-
जमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्र-
कवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये वसन्तमण्डितवन-
विहारो नाम चतुर्दशः सर्गः ॥

---

## पञ्चदशः सर्गः ।

नारायणक्षितिपतेः प्रथितप्रभाव-
प्रौढप्रतापकिरणैरिव तप्तमूर्तिः ।
व्यक्तोदयः प्रतिदिनोपचितार्कतेजः-
पुञ्जैर्निदाघसमयोऽथ समाजगाम ॥ १ ॥

उद्यत्कठोरतरभास्करधामदग्ध-
पादाम्बुजेव शनकैरगमद्दिनश्रीः ।
चण्डांशुशोषितसुधस्य लघोः सुधांशोः
सद्योगतेषु (?चरणेषु) निशा कृशाऽभूत् ॥ २ ॥

कर्णे वारिजमानने मृगमदं कर्पूरपूरं कुचे
मौलौ चम्पकचारुदामवलयं बालं मृणालं भुजे ।
कण्ठे बालसरोजहारलतिकामालम्बमानास्तदा
दृष्टाः कस्य सचेतसः स्म न मनः क्रीणन्ति वामभ्रुवः ॥ ३ ॥

कलयामि दिवाकरः करालद्युतिरारुह्य वृषं बभूव रुद्रः ।
स परं कथमन्यथा विधत्ते परितापं पुरसुन्दरीजनानाम् ॥ ४ ॥

किं विना शिशिरवारिणेति किं वायुराप कृशतां शनैः शनैः ।
भास्करोऽपि सुतरां तृषाऽऽकुलो भूरि वारि सरितां समाददे ॥५॥

हरितो हुताशनमुचः परितः सरितोऽपि वीतपयसो विहिताः ।
जनता खरांशुमहसाऽऽकुलिता मदनो वधूकुचतटीमगमत् ॥ ६ ॥
अथ भैरवभूमिपालसूनुः सह शुद्धान्तकुरङ्गलोचनाभिः ।
कमनीयविलासवासवापीजलपालीषु विलासकेलिमाधात् ॥ ७ ॥
वेल्लद्भुजावल्लिविलोलिताम्भोनिमज्जदुन्मज्जदुरोरुहाणाम् ।
शरीरवल्ल्या वरवर्णिनीनां सा दीर्घिका हेममयी बभूव ॥ ८ ॥
पूर्णीकृतानां जलयन्त्रिकाणां धाराजलैश्चामरचारुशोभैः ।
निमीलिताक्ष्यः सरसीरुहाक्ष्यः परस्परं सस्मितमभ्यषिञ्चन् ॥ ९ ॥
नारायणक्षोणिभुजा सलीलं सिक्ते प्रियाया वदनारविन्दे ।
मुखेन्दुरासीत्प्रतिनीरजाक्ष्याः सिक्तो गलल्लोचनवारिपूरैः ॥ १० ॥
विलोक्य तासां मुखचन्द्रमाराद्वापीसरोजानि निमीलितानि ।
कोकाः सशोका दिवसेऽप्यभूवन्बभुः प्रसन्नानि च कैरवाणि ॥११॥

कस्तूरीमलयजकुङ्कुमावलेपे
वीचीभिः सपदि हृते विलासवत्याः ।
उद्वीक्ष्य स्तनकलशे स्फुटं नखाङ्कं
सन्तेपे पयसि हिमेऽप्यहो सपत्न्या ॥ १२ ॥

सहैव नारायणपार्थिवेन निदाघसन्तापभरं निरस्य ।
उत्तीर्य तोयादबलासमूहो जग्राह वस्त्राभरणानि सद्यः ॥ १३ ॥

अकञ्चुकमुरस्थलं स्फुटनखाङ्कशोभौ कुचौ
विलोचनमनञ्जनं (गल)दलक्तरागोऽधरः ।
घनं जघनमण्डनं विगतशाटकं योषितां
रतान्तसमयश्रियं सलिलकेलयस्तेनिरे ॥ १४ ॥

निदाघमपि निर्जित्य जलकेलिमिषादिति ।
नारायणधरापालः सुन्दरं मन्दिरं श्रितः ॥ १५ ॥

श्रीशाहनारायणपार्थिवस्य प्रौढप्रतापं परितः प्रसार्य ।
प्रचण्डमार्त्तण्डमरीचिदम्भान्निदाघकालोऽपि विनिर्जगाम ॥१६॥

चञ्चत्पीनपयोधरा चलतडित्प्रेङ्खत्कटाक्षच्छटा
चित्रेन्द्रायुधमण्डना घनतमःकस्तूरिकालेपना ।

श्रीनारायणशाहपार्थिवगुरोरालोकनायेव किं
प्रावृट्पङ्कजलोचनाऽथ शनकैराविर्बभूवाद्भुता ॥ १७ ॥
घनकुम्भिनि गर्जति घोरतरं हरिरम्बुधिमिन्दिरया सहितः ।
वनिताकुचदुर्गतटं मदनस्तपनोऽपि भिया बत सिंहमगात् ॥१८॥
जलप्लुतां वीक्ष्य वनीं विलासैः पयोमुचामष्टमसिन्धुशङ्की ।
बर्हिः फणीन्द्रो वहति स्म मन्ये फणं शिलीन्ध्रोद्यकैतवेन ॥१९॥

पर्जन्यो मुदमुदपादयज्जनानां
दावाग्निज्वरमहरन्महावनानाम् ।
कल्याणं कलयति च स्म चातकानां
बाहुल्यं स्म वदति पान्थपातकानाम् ॥ २० ॥
रटद्धनघरट्टेन घृष्टस्य प्रावृषा हठात् ।
खण्डाइव मृगाङ्कस्य बलाका दिवि रेजिरे ॥ २१ ॥

सार्द्धं सुधांशुद्युतिमुग्धदुग्धैः संभुज्य तारावलिकूरपूरम् ।
उच्छिष्टदोषापनयाय तोयैस्ततान गण्डूषमिवाम्बुवाहः ॥ २२ ॥
अत्युष्णमास्वाद्य सहस्रभानुं निपीडितो नीरधरो नितान्तम् ।
मुहुर्मुहुर्हन्त मरीचिदग्धां तडिद्रसज्ञां तरलीचकार ॥ २३ ॥
केकिनि क्वणति कोमलकण्ठे वाति च स्फुटकदम्बसमीरे ।
मानिनीजनमनःस्थितमानस्तत्क्षणेन शतशर्करितोऽभूत् ॥ २४ ॥

लाटीमण्डलपीवरस्तनतटीपाटीरपाटच्चरः
कार्णाटीगणकर्णपूरकलिकानि(?द्रा)भरद्रावकः ।
आभीरीकुचकुम्भघर्मकणिकाभूयस्सुगन्धीभव-
त्कस्तूरीमकरीपुरस्सरचरः प्राप्तः कदम्बानिलः ॥ २५ ॥

स्नात्वा सलीलं वियदम्बुराशौ प्रावृट्कृशाङ्ग्या भवनं व्रजन्त्या ।
निष्पीडितात्किन्नु बलात्पयोदचेलात्पयो निर्गलितं समग्रम् ॥ २६ ॥
नारायणक्ष्मारमणाय जैत्रप्रयाणवाचालतुरङ्गमाय ।
अमन्दमाङ्गल्यचिकीर्षयेव ततः समेता शरदम्बुजाक्षी ॥ २७ ॥
प्रावृट्कृशाङ्ग्याः सुतरां जरत्याः प्रापुः पयोदाः पलितानुकारम् ।
समुत्थितायाः शरदङ्गनाया मरालमञ्जीररवो बभूव ॥ २८ ॥

शृङ्गारलक्ष्मीर्मदनस्य राज्ञो नीराजनां विश्वजयाय तेने ।
तारावलिस्तत्र किलाक्षतालिः सम्पूर्णचन्द्रः कलशो बभासे ॥ २९ ॥

मदने कृतसन्धाने मित्रं प्राप्य निशाकरम् ।
भावालस इव श्रीमान् भानुः कन्यामशिश्रयत् ॥ ३० ॥

वल्लभस्य जलधेरयं रिपुः कुम्भजो मुनिरुदेति हा पुनः ।
चिन्तयेव शरदीति सिन्धवो लेभिरेऽति तनुतां दिनेदिने ॥ ३१ ॥

चण्डांशुशीतांशुविराजिनेत्रा काशैः प्रकाशैः कुमुदैः सहासा ।
शरद्वधूर्गौरपयोधरश्रीः सचेतसः कस्य मनो न जह्रे ॥ ३२ ॥

पराभूतनिश्शेषभूवल्लभाय प्रचण्डप्रतापाय नारायणाय ।
मरालीविरावैर्जयं कीर्तयित्वा सहर्षं शरत्प्रेयसी संप्रतस्थे ॥ ३३ ॥

अथ नारायणक्रीडादैर्घ्यसम्पादनाय किम् ।
रजनीं रचयन्दीर्घां हेमन्तऋतुराययौ ॥ ३४ ॥

हेमन्तकालं समवाप्य मित्रं धनुः समाकर्षति पञ्चबाणे ।
संरक्षणार्थं दिननायकोऽपि समाललम्बे धनुरादरेण ॥ ३५ ॥

रविः स्वमहसां वोढुं परितापं किमक्षमः ।
उत्तरां दिशमुत्सार्य दक्षिणां दिशमाययौ ॥ ३६ ॥

नीहारसंभारनितान्तशीतं द्विजातिभिर्दत्तमपि प्रसह्य ।
हेमन्तमासे तरणिः प्रभाते सन्ध्यार्घ्यतोयं बहु नैव मेने ॥ ३७ ॥

हेमन्तावसरे सरोजनिकरैर्लीनं वने कैरवै-
र्निर्मुक्तं नियतेर्बलाद्भगवता मन्दायितं भास्वता ।
उन्मीलन्महसाप्यनेन सहसा चन्द्रेण दीनायितं
किं मे स्यादिति चिन्तयेव कलये क्षीणोऽभवद्वासरः ॥ ३८ ॥

पूर्वाम्बुधिस्नानसमागतेन शीतेन मन्दीकृतकान्तिपूरः ।
जानीमहे वासरसार्वभौमः प्रातः करेणाम्बरमाललम्बे ॥ ३९ ॥

ध्वस्तं सरोजैस्तपनेन शान्तं मानेन दूरङ्गतमङ्गनानाम् ।
इत्थं विपक्षाभिभवेन तुष्टा हेमन्तरात्रिर्बहुतुन्दिलाऽभूत् ॥ ४० ॥

परीरभ्य वक्षोजमास्पृश्य चञ्चत्कपोलं समाचुम्ब्य बिम्बाधरोष्ठम् ।
पटीरद्रवं पाणिनाऽऽदाय कान्तः प्रियां भीषयामास निर्गन्तुकामाम् ॥

मलिनीकृतयामिनीशबिम्बामिह नारायणसार्वभौमकीर्तिम् ।
परितो मिहिकामिषाद्वितन्वन्नपि हेमन्तऋतुः क्वचिज्जगाम ॥ ४२ ॥

नारायणमहाराजभजने मदनेरितः ।
समाजगाम शिशिरः प्रियालिङ्गनकौतुकी ॥ ४३ ॥

नलिनीविरहेषु पीडयन्मां भवताऽसौ मकरध्वजो निवार्यः ।
इति किं मकरं सरोजबन्धुः सपदि प्रार्थयितुं समाजगाम ॥ ४४ ॥

कर्णे कुन्दं वदनकमले पूगताम्बूलपूरं
मुक्ताहारं कुचपरिसरे चारुचैलं नितम्बे ।
सान्द्रानन्दे शिशिरसमये बिभ्रती पङ्कजाक्षी
यस्य क्रोडं भजति जनता तस्य भाग्यं ववन्दे ॥ ४५ ॥

अरुणस्य तुषारकम्प्रपाणिप्रचलत्तीक्ष्णकशाभिघातयोगात् ।
त्वरया परया हरेस्तुरङ्गाः प्रययुर्यत्तदभूहिनं लघीयः ॥ ४६ ॥

आलिङ्ग्य स्तनभारमादरभरादाचुम्ब्य बिम्बाधरं
वक्त्राम्भोरुहमाकलय्य निबिडं निष्पीड्य कण्ठस्थलीम् ।
अन्योन्यं च निबध्य बाहुलतया निद्राणयोः कामिनो-
रित्थं कौतुकमीक्षितुं किमु चिरं दीर्घायते स्म क्षपा ॥ ४७ ॥

जग्राह नीहारमिषेण मन्ये नीलाम्बरं दिग्वनितासमूहः ।
ऊष्माऽपि पङ्केरुहलोचनानां वक्षोजसन्धिं ध्रुवमध्युवास ॥ ४८ ॥

विरेजिरे वल्लिषु कुन्दकोरकाः कुञ्जं श्रिताः शीतभियेव तारकाः ।
हिमानिलस्पर्शविमुक्तमुत्तमं स्मरोऽप्यनङ्गत्वममन्यताऽऽत्मनः ॥ ४९ ॥

जरामिव वहन्नङ्गे पिशङ्गदलकैतवात् ।
निर्गलत्कुन्ददशनः शिशिरोऽभूज्जरत्तरः ॥ ५० ॥

चिरपरिचितकुन्दं हन्त हातुं न योग्यं
कथमुदयपरं वा चूतमर्हेदुपेक्षाम् ।
इति तदुभयगाढप्रेमबद्धान्तरात्मा
परिहरति न यातायातखेदं स भृङ्गः ॥ ५१ ॥

नरपतिरवलोक्य तामृतूनां घनतरकौसुमसम्पदं प्रसन्नः ।
परमकृत रसालकीर्तिपूरैः सततवसन्तमहोत्सवं जगत्याः ॥ ५२ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नृतुकेलिकौतुकविधिस्तिथ्यङ्कसर्गोऽगमत् ॥ ५३ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचिचुम्बितचरणसरो-
जमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्र-
विरचिते राष्ट्रौढवंशे महाकाव्ये जलकेलि ऋतुवर्णनं नाम
पञ्चदशः सर्गः ॥

---

## षोडशः सर्गः ।

अथ क्षितीशः शिखिराजधानीलक्ष्मीसमालोकनदत्तचित्तः ।
आवेष्टितः पार्श्वचरैः समन्तादारुह्य मातङ्गमगात्प्रतोलीम् ॥ १ ॥
समन्ततस्तोरणरोचमानां निरन्तरानन्दसमुद्रपौराम् ।
नरेश्वरस्तां नगरीमपश्यन्निजां मरुत्वानिव राजधानीम् ॥ २ ॥
यत्र स्फुरन्नूपुरशिञ्जितानां पदैर्वधूनां प्रियगामिनीनाम् ।
बभूव कूजत्कलहंसराजीविराजिरक्तोत्पलभूषिता भूः ॥ ३ ॥
वहन्ति तारानिकरा यदीयप्रासादभागेषु कपोतशोभाम् ।
अपि स्फुटस्फाटिकराजहंसः शङ्कां करोति ध्रुवमण्डलस्य ॥ ४ ॥
जनेन तुष्टेन यदीयहट्टे विलोक्यते सर्वपदार्थजातम् ।
पुरा मुरारेरुदरे गभीरे दीर्घायुषा तेन तपस्विनेव ॥ ५ ॥
लसन्मृगाङ्कोपलभित्तबद्धा विलासवापी प्रतिरात्रि यत्र ।
बिभर्त्ति चन्द्रोदयवर्द्धमानकल्लोलिनीवल्लभशीललीलाम् ॥ ६ ॥
नारायणेनानिशसेव्यमाना लक्ष्मीवता विश्वहितेन याऽसौ ।
आनन्दपीयूषनिमग्नलोका वैकुण्ठलोकानुकृतिं करोति ॥ ७ ॥
समुल्लसच्चम्पकपुष्पगौरी निकेतकेलीवलभीं भजन्ती ।
विभाति यस्यां सरसीरुहाक्षी कन्दर्पपृथ्वीपतिदीपिकेव ॥ ८ ॥

अट्टालिकारूढचकोरनेत्रा समीरलोलाम्बरपल्लवश्रीः ।
विद्योतते यत्र सुवर्णरम्भास्तम्भावनद्धेव महापताका ॥ ९ ॥
कामोत्सवोत्कण्ठितमानसाभिर्मदालसाभिः सह वल्लभाभिः ।
सौधाग्रभागेषु विहारभाजां यस्यां वितानीयति यामिनीशः॥१०॥
परैरयोध्या मथुरा च मायानिधिः प्रकाशीकृतलोकहर्षा ।
उद्गलकाञ्चीरसिकानवन्ती मनोहरद्वारवती पुरी या ॥ ११ ॥
विचित्रवादित्ररवैस्तुरङ्गहेषारवैर्वारणबृंहितैश्च ।
नित्यं सहस्रद्विजवेदघोषो यस्यां न शूद्रश्रुतिमार्गमेति ॥ १२ ॥
अग्नित्रयीसम्भवधूमरेखा यस्यां समन्त्राहुतिपुण्यगन्धा ।
उत्फुल्लनीलोत्पलपत्रलीला कर्णावतंसीयति दिग्वधूनाम् ॥ १३ ॥
विधाय वेणीं चमराणि यस्यां वक्षोरुहौ हाटकसम्पुटौघान् ।
दन्तांश्च मुक्ताः करसंज्ञयैव क्रीणन्ति वीथीषु वणिङ्मृगाक्ष्यः ॥ १४ ॥
सीतासुमित्रातनयान्वितस्य समीरपुत्रेण निषेवितस्य ।
श्रीरामचन्द्रस्य मनोहरं या प्रासादमुच्चैस्तरमादधाति ॥ १५ ॥
भक्तिप्रकर्षाद्व्रजतां जनानां विश्रान्तिचिन्तामणिमन्दिराणाम् ।
श्रीवासुदेवादिकदेवतानां प्रासादमाला विलसन्ति यस्याम् ॥१६॥
अधुनैव विलोकितेव सेयं नगरी विस्मयमाततान राज्ञः ।
अवलोकितमप्यनेकवारं कुरुते प्रीतिरहो पुनर्नवीनम् ॥ १७ ॥
तत्रान्तरे यामिक एत्य कश्चित्कृताञ्जलिः पार्थिवमाबभाषे ।
मध्याह्नकालो वरिवर्त्ति राजन्नह्नाय माध्याह्निककर्म कार्यम् ॥१८॥
निरशङ्कमङ्के मिलितां जनानां छायां निरीक्ष्यातिरुषा प्रतप्तः ।
भास्वानसावम्बरमध्यचुम्बी क्षणं कथञ्चित्पुरतो न याति ॥ १९ ॥
पातुं विलोलद्रसनाः कुरङ्गाः पयांसि काङ्क्षन्ति मरीचिकासु ।
लङ्घीकृताशा मनुजा इवामी सुखानि भोक्तुं भवधोरणीषु ॥२०॥

मध्याह्ने जलतालवृन्तमनिलः सर्वात्मना सेवते
वारि स्वेदमिषेण शीतलवधूवक्षोजमालम्बते ।
निद्रा नेत्रमुपैति पक्ष्मपटलच्छायाश्रयादेव किं
पान्थानामपि पादयोर्निपतति छायाऽपि मा यात्विति ॥ २१ ॥

घर्माम्भो नकुलस्य लेढि रसनाप्रान्तेन चक्षुःश्रवाः
स्वैरं केसरिणोऽपि बालहरिणः श्वासानिलं जिघ्रति ।
किं ब्रूमोऽम्बरमध्यचुम्बति (म्बिनि) परं भानौ तृषार्ता किमु
च्छायाप्युल्लसदालवालसलिले मूले तरोर्लीयते ॥ २२ ॥
कान्ताचञ्चललोचनाञ्चलचमत्कारे विरामं गते
म्लाने कोमलचम्पके परमितो जैत्रा न मे मार्गणाः ।
सङ्ग्रामस्तु कथं भवेदिति धिया जेयस्य निद्रामय-
व्यामोहाय जगत्रयस्य मदनः प्रस्वापनास्त्रं दधौ ॥ २३ ॥
अङ्गारान्वमति स्फुटं वसुमती ज्वालान्प्रसूते हरि-
त्सतायदिश्रयमातनोति गगनं तापं विधत्ते पयः ।
वातेनापि पलायितं क्वचिदहो साडम्बरे भास्करे
चित्ते चन्दनशीतले चलदृशां लीनो मनोभूरभूत् ॥ २४ ॥
तस्मिन्निगद्य समयोचितवाचमित्थं
तूष्णीं स्थिते विहितकर्मपटुः पुरोधाः ।
अत्येति हन्त दिनमध्यममुं सुराणां
पूजेति तं सपदि विज्ञपयाम्बभूव ॥ २५ ॥
ततः समागत्य महीमहेन्द्रः सानन्दमभ्यङ्गविधिं व्यधासीत् ।
नदत्सु तूर्येषु नटोत्तमेषु नृत्यत्सु गायत्सु च वैणिकेषु ॥ २६ ॥
अभ्यङ्ग्य कार्ष्णागरवेण पूर्वं सुगन्धिना तैलवरेण नार्यः ।
उद्वर्तयन्तिस्म तमेणनाभिकाश्मीरकर्पूरपटीरपङ्कैः ॥ २७ ॥
ततः प्रसादं कनकाम्बरादि प्रदाय तौर्यत्रिककोविदेभ्यः ।
महीमहेन्द्रो विधिवद्विशुद्धैरुष्णाम्बुभिः स्नानमुपाचरद्द्राक् ॥२८॥
ततः स धौते परिधाय वस्त्रे पवित्रमूर्तिः कमनीयकीर्त्तिः ।
सन्ध्यां सुवर्णादिपवित्रपाणिः कृत्वा व्यधासीत्पितृतर्पणानि॥२९॥
स षोडशार्चेन यथाविधानं सम्पूज्य पञ्चायतनं नरेन्द्रः ।
सम्पूर्य कामानपि मुक्तिदो यस्तं मन्त्रराजं जपति स्म राजा॥३०॥
स(माप्य)मर्प्य जप्यं कुलदेवतानां पादारविन्दे कृतपाणिबन्धः ।
संस्तुत्य चानम्य नतेन मूर्ध्ना नृपः परं धाम हृदि न्यधासीत् ॥३१॥

विधाय सम्यग्बलिवैश्वदेवौ यज्ञं पितॄणामपि धर्मशीलः ।
पादारविन्दं धरणीसुराणां प्रक्षाल्य राजाऽदित नित्यदानम् ॥ ३२ ॥
पङ्क्तेः पवित्रीकरणप्रवीणैर्मित्रैः सुहृद्भिः सह सच्चरित्रैः ।
हिरण्मये भोजनभाजनेऽसावभुङ्क्त नानाविधमन्नमीषत् ॥ ३३ ॥
भूपतेरथ सुखं निषीदतः पण्डितैः सह कलाविचक्षणैः ।
हास्यगर्भमभवत्परस्परं नैककौतुककथामहोत्सवः ॥ ३४ ॥

अत्रान्तरे निलययायिवयोविरावैः
शंसन्निव स्मरनरेन्द्रजयप्रयाणम् ।
चञ्चज्जपाकुसुमगुच्छसहोदरश्री-
र्भानुर्बभूव चरमाचलचूलचुम्बी ॥ ३५ ॥

सायन्तनीं कामपि वीक्ष्य शोभां प्रदत्तचित्तं गुरुविस्मयाय ।
नराधिपं कोऽपि जगाद विद्वान्नकालविज्ञोऽवसरं जहाति ॥ ३६ ॥
विधाय जाग्रत्कमलां त्रिलोकीं राजन्निदानीं जलधिं प्रयाति ।
पश्यायमन्तश्शयशौरिनाभीसरोजबोधाय सरोजबन्धुः ॥ ३७ ॥
वयस्यतीते रविणा समस्तं सन्यस्तमेतेन किमु प्रतीमः ।
काषायवासोधरणात्तथाहि विलोक्यते लोहितमूर्त्तिरेषः ॥ ३८ ॥
प्राचीं विहाय प्रचुरानुरागो यद्वारुणीं सङ्गतवान्पतङ्गः ।
असाविदानीं परमानुतापात्करोति पातं चरमाद्रिमौलेः ॥ ३९ ॥
पतङ्गसिंहे पतिते पयोधौ कोपादिव स्वप्रतिबिम्बजातात् ।
निरुन्धते दिग्वलयं समन्तान्नागेन्द्रनीलानि ततस्तमांसि ॥ ४० ॥

नवनवघननीलं वासरे नूनमूर्द्ध्वं
रविकरनिकरेणालम्बितं यद्बभूव ।
अपरजलधिमध्ये मग्नमेनं विना त-
द्गगनमिव तमिस्रं भूतले पातमेति ॥ ४१ ॥

वने तमस्तोमघनेऽपि भीमे न गण्यते भीरभिसारिकाभिः ।
अभीष्टकार्ये गणयन्ति सन्तः किंवाऽन्तरायं ननु नान्तरीयम् ॥ ४२ ॥
मार्त्तण्डकान्तोपलमण्डलेभ्यो निर्गत्य यः पावकजालपूरः ।
हा चक्रवाकीहृदयानि भेजे तत्पूर्वधूमस्तिमिरं किमेतत् ॥ ४३ ॥

कालसर्पगरलाकुलीकृते नायके दिनकरे सरोजिनी ।
कुड्मलान्तरगतालिमण्डलीकैतवेन विषपानमाचरत् ॥ ४४ ॥

अस्तं गते त्विषां पत्यौ विशन्ति ज्वलनं त्विषः ।
स एव पतिरग्रेऽपि लभ्येत कथमन्यथा ॥ ४५ ॥

श्रीनारायण ते प्रतापदहनज्वालाकलापारुणं
प्रत्यक्पर्वतघर्षणोपलतटे सन्ध्यारुचोल्लेखितम् ।
अम्भोभिः शमितं निजैर्दिनकरं सौवर्णपिण्डं स्फुर-
त्तारारत्नचयं प्रदाय गगनाद्गृह्णाति रत्नाकरः ॥ ४६ ॥

विस्रस्तं तिमिरं चकोरनिकरा निर्बाधमानन्दिताः
सिन्धुर्बन्धुरितो विकासिकुमुदैरामोदिता मेदिनी ।
इन्दोर्यद्यपि नाम रश्मिनिचयैः सम्पादितं साम्प्रतं
सर्वं तावदिदं तथाऽपि जनता तं द्रष्टुमुत्कण्ठते ॥ ४७ ॥

सम्पादयन्सपदि कैरवकोशकारा-
गारे नियन्त्रितमधुव्रतवृन्दमुक्तिम् ।
निर्मोचयन्प्रियतमाकुचबन्धनानि
श्रीमानसावुदयते रजनीनरेन्द्रः ॥ ४८ ॥

पश्य प्राचीनशैले पवनवलयितो धातुजन्मा परागः
शक्राशापङ्कजाक्ष्याः कठिनकुचतटे कुङ्कुमस्याङ्गरागः ।
आरक्तं नेत्रपेयं मधु रजनिवधूभालसिन्दूरबिन्दुः
कन्दर्पप्राणबन्धुर्विलसति जगदानन्दकन्दोऽयमिन्दुः ॥ ४९ ॥

वामाक्ष्या नवयावरागविलसद्बिम्बाधरेणादरा-
देषोऽचुम्बि च येन तेन परितः शीतद्युतेः शोणिमा ।
कस्तूरीनवपङ्कलेपितकुचद्वन्द्वेन चालिङ्गि य-
न्मध्ये तेन च नीलिमा हिमकरे मन्ये समुज्जृम्भते ॥ ५० ॥

केचित्पङ्कं पयोधेरथ मृगमपरे केचिदङ्कं निशायां
पीतध्वान्तं परे भूप्रतिफलमितरे केऽपि खण्डेन्द्रनीलम् ।
ब्रूमः श्रीशाहनारायण धरणिगृहे त्वत्प्रतापप्रदीप-
ज्वालासान्निध्यकालाञ्जनमयमुदधेः सूनुरन्तर्दधाति ॥ ५१ ॥

श्रीमत्कैरविणीवनं कमलिनीवृन्दं विमुक्तं श्रिया
सान्द्रानन्दधराश्चकोरनिकराः कोकाश्च शोकाकुलाः ।
शीतांशुर्नृप साम्प्रतं समुदितस्तिग्मांशुरस्तं गतः
संपत्तिर्जगतो विपत्तिरपि वा नैषा चिरस्थायिनी ॥ ५२ ॥

दिङ्मण्डलं तिमिरपङ्कघनं मयूखैः
प्रक्षालयन्निव तवोज्ज्वलकीर्त्तिपूरैः ।
इन्दुर्विलोकय जगद्विजयप्रयाण-
प्रारम्भकुम्भ इव भाति मनोभवस्य ॥ ५३ ॥

इत्थं तस्य गिरं निशम्य मुदितः काश्मीरकस्तूरिका-
पाटीरादिसुगन्धबन्धुरतरं कर्पूरदीपोज्ज्वलम् ।
आस्तीर्णप्रचुरप्रसूनविलसत्पर्यङ्कमुर्वीपतिः
सम्पूर्णीकृतपूगवीटिकमगादानन्दकेलीगृहम् ॥ ५४ ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नगरद्धिकालकथकः सर्गोऽगमत्षोडशः ॥ ५५ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणस-
रोजमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवी-
न्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये श्रीनारायणनगरीमध्याहसा-
याह्नवर्णनं नाम षोडशः सर्गः ॥

---

## सप्तदशः सर्गः ।

अथ तत्र केलिभवने मनोहरे हरिणीदृशो नवविलासशालिनीः ।
नृपतिस्तृतीयपुरुषार्थवारिधेः परपारतारणतरीररीरमत् ॥ १ ॥
मन्मथोऽपि निखिलायुधविद्यालक्ष्यलक्षणनिरीक्षणदक्षः ।
मानलक्ष्यमनुलक्ष्य वधूनां सन्दधे धनुषि बाणममोघम् ॥ २ ॥

काञ्चीकङ्कणरत्ननूपुरभवज्झाङ्कारकोलाहलै-
रुन्निद्रीकृतचित्तयोनिरलसोन्मीलन्मिलल्लोचना ।
घण्टाडम्बरचुम्बिकुञ्जरगतिः काऽपि प्रियाधिष्ठितां
मल्लीवल्लिपलाशपल्लवमयीं शय्यामयासीद्वधूः ॥ ३ ॥

सखीजनवचःशतैरियमहो नवोढा वधू-
रिदंप्रथममागता परि(र)मितः समालोकय ।
इमामतुलकौतुकाकुलमुरीकुरु प्रेयसी-
मिति प्रियसखी सखीमुपनिनाय तं कामपि ॥ ४ ॥

बिम्बोष्ठचुम्बनविधौ विमुखीबभूव
क्रोडीकृतौ च गमनाभिमुखी बभूव ।
पाणिद्वयं च कुचकोरकयोर्दुधाव
स्पर्शे हठग्रहविधौ च सखीं जुहाव ॥ ५ ॥

निर्मोचने च न जगाम न वा जगाम
व्यालोकने च वदने नितरां ननाम ।
शय्यानिवेशनविधौ न न नेत्युवाच
प्रेमप्रसादवचने न किमप्युवाच ॥ ६ ॥

नीवीविमोचनविधौ च करं रुरोध
क्रोधेन भर्त्सनविधौ च दूरं रुरोद ।
मुग्धाङ्गना यदपि काऽपि भयं बभार
प्राणेश्वरस्य च तथाऽपि मनो जहार ॥ ७ ॥

कामोन्मत्तसपत्नपद्मनयनासुस्निग्धभास्वन्नव-
व्यक्तालक्तकरक्तपादकमलन्यासाङ्कवक्षःस्थलम् ।
निर्यत्कज्जलनीललोचनजला लोलत्कपोलद्युतिः
सेर्ष्या काचन चञ्चरीकनयना भूपालमालोकत ॥ ८ ॥

लज्जयाऽपि सुतरामधोमुखी नूतनोढरमणी नराधिपम् ।
सौधरत्नवलयानुबिम्बितं रम्यवेषमनिमेषमैक्षत ॥ ९ ॥

बाले रम्यस्तारहारस्तवायं व्याजादेवं वक्षसि न्यस्तहस्ते ।
कान्ते किञ्चित्कुञ्चिताङ्गी नवोढा हारं दूरं लज्जयोज्झाञ्चकार ॥१०॥

आः प्राणेश मुहुर्विलोकयसि किं साश्चर्यमङ्गानि ते
किंवाऽपूर्वमिह प्रियेऽखिलजगल्लावण्यलक्ष्मीरिह ।
नेत्रे नाथ मुहुर्निमीलयसि किं दृग्दोषविच्छित्तये
नारीनायकयोरिति स्मितगिरस्तेनुः स्मरोत्तेजनाम् ॥ ११ ॥
मन्दकम्पितकरद्वयखेलत्कङ्कणक्वणविबोधितकामम् ।
पर्यरम्भि रमणेन विगाढं तत्र काऽपि रमणी रमणीया ॥ १२॥
कस्तूरिकाकुङ्कुमनीललोहितौ स्वयम्भुवौ वामदृशामुरोरुहौ ।
धरावलारातिरतीव शङ्करावपूजयच्चारु नखाङ्ककिंशुकैः ॥ १३ ॥
अधरोष्ठविम्बमवलोक्य भूपतेर्निजनेत्रचुम्बनविलग्नकज्जलम् ।
विनिवर्त्तिताननसरोरुहा मुहुर्हसितं नियन्तुमशकन्न सुन्दरी ॥१४॥
भजते तव स्मितसुधानिदानतां मृगशावकाक्षि किमिहेति पृच्छतः ।
हृदयेश्वरस्य करदर्पणं करे वरवर्णिनी चतुरमुत्तरं ददौ ॥ १५ ॥
किं हालाहलदाहशान्तिविधये बालामुखेन्दुश्रितः
किं नारायणपार्थिवाय समुपानीतस्तथा भीतया ।
कान्तानां कबरीभुजङ्गसदृशः सीमन्तवीथीफणा-
पर्यस्तो नु ललाटिकामणिरभात्केलीविमर्दश्लथम् ॥ १६ ॥
क्रीडाचक्रविहारवन्मुखविधोः कन्दर्पहिन्दोलवत्
प्रोद्यत्कुचकाञ्चनाचलविपर्यासे मुखेन्दुं प्रति ।
धावत्कामिमुखेन्दुयुग्मघटनासंभ्रान्तनक्षत्रव-
त्कान्ताया विपरीतकेलिकरणे हारः स्म दोलायते ॥ १७ ॥
सुतनुरुरु विभोरुरो निरोद्धुं घनपरिरम्भणदायिनी न सेहे ।
असहत न मृगीदृशोऽपि तुङ्गस्तनभरदूरनिवारितं नरेन्द्रः ॥१८॥
वीर त्वदालोकनतो मृगाक्ष्याः पलायितुं वाञ्छति बाल्यमस्याः ।
तारुण्यमिच्छत्यधिवस्तुमेनां सखीति कस्याश्चिदमुं जगाद ॥१९॥
यदपि कुटिलिता मृगीदृशा भ्रू रतिपतिना तदनामि नाम चापम्
यदकृत दयिता तदातु हुंहुं मनसिजमार्गणमुक्तिहुंकृतं तत् ॥ २० ॥
गौराङ्गि कुर्याः कुचहेमकुम्भे मा चन्दनं मण्डनसम्भ्रमेण ।
कान्ते सुवर्णे रजतावलेपो हानिं परां प्रत्युत संविधत्ते ॥ २१ ॥

इत्थं निगद्य क्षितिपालमौलिः सानन्दमाचुम्ब्य कपोलपालीम् ।
परिस्फुरच्चम्पककोरकाङ्गीममन्दमालिङ्गदनङ्गकल्पः ॥ २२ ॥

न माल्यं धम्मिल्ले न च नयनयोरञ्जनरुचि-
र्न पत्राली गण्डे किमपि न च रागोऽधरदले ।
न चालेपो गात्रे न च कुचतटे हारलतिका
न च श्रोणौ काञ्ची तदपि तरलाक्ष्यः शुशुभिरे ॥ २३ ॥

अमन्दसीत्कारसमीरधाराविधूतदन्तक्षतवेदनानाम् ।
विलासिनीनां रतनिस्सहानां निद्राऽऽशु नेत्राभिमुखीबभूव॥२४॥

ततो वतंसोत्पलमुत्पलाशं किञ्चित्समुन्मीलनकैतवेन ।
मनोविरामं रजनीविरामं शशंस कर्णे वरवर्णिनीनाम् ॥ २५ ॥

चललोचनानि चललोचना जनाः स्फुटकैरवाणि च कुमुद्वतीचयाः ।
बत तुल्यकालमुभयानि चोभये चिररात्रिजागरवशादमीलयन् ॥२६॥

समन्ततो मङ्गलतूर्यनादे दिक्चक्रवालेषु विजृम्भमाणे ।
वैतालिकाः कोमलकान्तवाचः प्रबोधयामासुरथ क्षितीशम् ॥२७॥

जयजय क्षितिनायकमण्डलीमुकुटमण्डन भैरवनन्दन ।
दिनमुखश्रियमाशु विलोचनद्वयचमत्कृतिभिः सफलीकुरु ॥२८॥

ध्वान्तस्तोमजिगीषया जिगमिषोर्मार्त्तण्डपृथ्वीपतेः
सन्ध्या ताम्रपटीकुटीव महती प्राभातिकी भासते ।
जानीमस्तिमिरस्य कीर्त्तय इव क्षीणाः क्षणात्तारका
जाताश्चाम्बुजिनीः पराभवभयादस्ताद्रिमालम्बते ॥ २९ ॥

किञ्चित्किञ्चिदुदञ्चिते दिनकरे वामभ्रुवां निष्प्रभाः
शृङ्गारा इव नेत्रहीनदयितस्याग्रे प्रदीपाङ्कुराः ।
मूर्खाणामिव मानसं न किमपि व्यालोकते कौशिक-
श्रेणी प्रोषितभर्तृकामुखकलामालम्बते कैरवम् ॥ ३० ॥

पद्मिनी दिनकरेण बोधिता जृम्भते भ्रमरबाष्पवर्षिणी ।
चक्रवाकवनिताऽपि वल्लभं दुर्लभं निशि चिराय चुम्बति ॥ ३१ ॥

पूर्वाद्रिमाणिक्यविभूषणाय दत्त्वार्घ्यमम्भोरुहबान्धवाय ।
समित्प्रदीपा(प्ता)ग्निषु भूमिदेवाः सद्यो हविर्जुह्वति मन्त्रपूतम् ॥३२॥

लक्ष्मीकान्त मुकुन्द माधव हरे श्रीराम सीतापते
गौरीवल्लभ भर्ग शङ्कर शिव श्रीकण्ठ मृत्युञ्जय ।
भो मातर्जगदम्ब पार्वति शिवे हेरम्ब लम्बोदर
स्वामिन् भास्कर पाहि मामिति मुहुः प्रातः स्मरन्ति द्विजाः॥३३॥

उत्तिष्ठ क्षितिपालभालतिलक श्रीसूर्यमालोकय
श्रीमन्नाथ गजाननाय महसे संप्रार्थयाभीप्सितम् ।
गोविन्दं कमलाविलासनिलयं श्रीराममाराधय
श्रीकण्ठं जगदीश्वरं पुरहरं चित्ते चिरं चिन्तय ॥ ३४ ॥

सायंप्रातरुदश्चदङ्घ्रिकमलप्रक्षालनालालसः
स्नात्वा ताम्रत[illegible] वेदिवि[illegible]पति यत्प्राच्यां प्रतीच्यां रविः ।
तन्निर्णेजनवारि य[illegible] तोर्यस्याः पदाम्भोजयोः
सन्ध्याबुद्धिमिहातनोत्यनुदिनं तामम्बिकां पूजय ॥ ३५ ॥

इत्यनिन्द्यनुतिगीतिमङ्गलैर्बन्दिनन्दनजनैः प्रबोधितः ।
सन्मतिः सपदि मेदिनीपतिर्मुञ्चति स्म कमनीयमञ्चकम् ॥ ३६ ॥

सवनादिकर्मणि कृते सकलं मुकुरादिमङ्गलमवेक्ष्य पुरः ।
अतिथिप्रियो विरचिताभरणः श्रवणातिथिं तिथिमसावकरोत् ॥३७॥

ततः समागत्य नयप्रधानाः प्रणेमुरेनं प्रकृतिप्रधानाः ।
धराधिपः सुन्दरदृष्टिपातैः स्वस्वाधिकारेषु च तानयुङ्क्त ॥ ३८ ॥

नित्यं प्राच्यप्रतीच्यक्षितिधरकुचयोर्यद्गुणग्रामदाम-
प्रोद्यत्कीर्तिमुक्ताफलपटललसत्तारहारं दधाना ।
वीरश्रीशाहनारायणधरणिपतिश्रेणिकोटीरहीरे
धीरेऽस्मिन्सानुरागा समजनि सुतरां मेदिनी कामिनीव ॥३९॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्नगमन्मुनीन्दुगणितः सर्गो विहारोत्सवः ॥ ४० ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिचुम्बितचरणसरोजमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये कामक्रीडाप्रातःकालवर्णनं नाम सप्तदशः सर्गः ॥

---

## अष्टादशः सर्गः ।

अथ नारायणः श्रीमानास्तिकीं धियमुद्वहन् ।
धर्माननेकशः कर्तुमचीकमत सादरम् ॥ १ ॥
भूपतिश्चिश्चिलिग्रामे गगनोदरचुम्बिनम् ।
अकरोन्मुकुटोदारं प्रासादं चारुमण्डपम् ॥ २ ॥
तत्र विश्वेश्वरं साक्षात्तथा विष्णुं चतुर्भुजम् ।
पुरस्कृत्य महीदेवान्पार्थिवः प्रत्यतिष्ठिपत् ॥ ३ ॥
सम्पूज्य विधिवद्भूयो गिरीशपुरुषोत्तमौ ।
गोभूमिरत्नकनकैर्ब्राह्मणान्पर्त्समुन् ॥ ४ ॥
यथाविधि कृतैर्होमैः प्रीणयि कर्णे दिवौकसः ।
नृपतिर्विविधै रत्नैर्भूसुरान्पर्यतर्पयत् ॥ ५ ॥
इति सम्पूज्य भूदेवान्स दत्तसफलाशिषः ।
स्वकीयमगमत्सौधं निरन्तरमहोत्सवम् ॥ ६ ॥
अथ जैत्रपुरे रम्ये श्रीबावेश्वरसन्निधौ ।
अग्निष्टोमाभिधं यागमचिकीर्षन्महीपतिः ॥ ७ ॥
इच्छामात्रसमानीतसामग्रीहृष्टमानसः ।
ज्योतिष्टोमाख्ययागस्य स सम्भारानचीकरत् ॥ ८ ॥
अथ क्षितिपतिर्बिभ्रद्वदनेन विधोः कलाम् ।
अष्टमूर्तेरभून्मूर्तिरष्टमी विजितेन्द्रियः ॥ ९ ॥
ब्रह्मादिषोडशर्त्विग्भ्यः प्रादाद्दशविधं पदम् ।
वरणाङ्गतया यज्वा यज्ञविद्याविशारदः ॥ १० ॥
सहितः षोडशर्त्विग्भिश्चित्रमाल्यानुलेपनः ।
व्यराजत्पार्थिवः पर्वशर्वरीसार्वभौमवत् ॥ ११ ॥
वरणोचितसम्भारसम्भ्रमानन्दविस्मिताः ।
ऋत्विजो यज्ञविद्यैव किमायातेति मेनिरे ॥ १२ ॥
धृतैणचर्मशृङ्गोऽपि स विसर्जितकुन्तलः ।
केनापि तेजसा यज्ञमण्डपे मण्डितोऽभवत् ॥ १३ ॥

दीक्षितो न ददातीति श्रुतिप्रामाण्यभङ्गभीः ।
राजा मनोरथैरेव दानव्यसनमाश्नुत ॥ १४ ॥
यज्ञाधिकारपशुना समिज्य विधिमार्गतः ।
आग्नीषोमीयपशुना नारायणनृपोऽयजत् ॥ १५ ॥
न हिंस्यादिति वाक्येन लौकिक्येव निषिध्यते ।
हिंसा वैधी तु तद्भिन्ना न निषेधस्य गोचरः ॥ १६ ॥
घृताहुत्युज्ज्वलस्फूर्जदग्निज्वालोष्णविग्रहः ।
दामांशुबद्धपशुको यूपः सूर्य इवाबभौ ॥ १७ ॥
दर्भसन्दर्भधम्मिल्ला तनुमध्या सुमेखला ।
पुरोडाशस्तना वेदिर्विरराज वधूरिव ॥ १८ ॥
औदुम्बरी महावेदिः स्थिता रेजे नवांशुका ।
प्राग्वंशमण्डपं रम्यं वरीतुमिव सङ्गता ॥ १९ ॥
अग्रहीदथ विक्रेतुः सोमं राजा गवादिना ।
अम्बुधेरिव मन्थाद्रिरज्ज्वाकर्षेण माधवः ॥ २० ॥
आरब्धवानथातिथ्यं सर्वप्रकृतिधर्मवित् ।
प्रमाणादिप्रसङ्गान्तद्वादशाध्यायतत्त्ववित् ॥ २१ ॥
ईजिरे ऋत्विजः प्रातःसवने वपया ततः ।
पुरोडाशेन मध्ये तु तृतीये हृदयादिभिः ॥ २२ ॥
अनडुन्नवचर्मात्तसोमाभिषवशब्दतः ।
आविरासीदथोत्साहः कोऽपि पुण्यस्य यज्वनः ॥ २३ ॥
हवींषि यजमानस्य जायया वीक्षितानि ते ।
अग्नौ कृतप्रणयने जुहवामासुरृत्विजः ॥ २४ ॥
अभ्रंलिहैरिवाहूता धूमैराहुतिगन्धिभिः ।
इन्द्रादिदेवता जक्षुर्मन्त्रपूर्वं हुतं हविः ॥ २५ ॥
ग्रहैर्दशभिरध्वर्युर्जुहाव हविरादृतः ।
चमसाध्वर्यवः सोमं चमसैर्जुहुवुर्मुदा ॥ २६ ॥
सदो मण्डपमध्यस्थाः सोमपानं वितेनिरे ।
नारायणमहाराजप्रसादादृत्विजो मुदा ॥ २७ ॥

नारायणमहाराजश्चिरं जीवतु भूतले ।
सोमपानभवानन्दपूर्णा इत्याशिषं ददुः ॥ २८ ॥
ग्रावस्तुत्सोमपानार्थी कात्यायनमुनेर्मतम् ।
उत्थाप्य दूषयामास कुमारिलमतं श्रयन् ॥ २९ ॥
ऋत्विग्मण्डलकीर्णस्य मण्डपस्यावनीपतिः ।
श्रियं कामपि संवीक्ष्य घनानन्दमविन्दत ॥ ३० ॥
यत्र सोमसुधापानं कर्तुमिन्द्रः समागतः ।
नातः परतरं तीर्थमित्यूचुः सदसि स्थिताः ॥ ३१ ॥
केवलं स्वर्गिणः स्वीयाः पूर्वजा नामुना कृताः ।
ऋत्विजामपि सभ्यानामामुष्मिकफलालयाः ॥ ३२ ॥
अथाद्यर्त्विक्चतुष्काय गवां द्वादशकं नृपः ।
प्रत्येकं व्यतरद्धैर्यं तृणीकृतसुरद्रुमः ॥ ३३ ॥
द्वितीयर्त्विक्चतुष्काय प्रत्येकं गोचतुष्टयम् ।
यच्छति स्म कलौ कर्णः शतक्रतुनिभो नृपः ॥ ३४ ॥
तुरीयर्त्विक्चतुष्काय प्रत्येकं गोत्रयीमदात् ।
विध्युक्तां दक्षिणामेवं व्यभजद्गोशतं नृपः ॥ ३५ ॥
ततः स कनकं प्रादादात्रेयाय द्विजन्मने ।
असङ्ख्यातद्विजेभ्यस्तु व्यतरद्भूरिदक्षिणाम् ॥ ३६ ॥
ग्रहादियज्ञपात्राणि गृहीत्वा सपरिग्रहः ।
राजावभृथयज्ञाय रथारूढो नदीमगात् ॥ ३७ ॥
विजेतुमिव संसारविपक्षमभिषेणयन् ।
व्यरुचन्नृपतिस्तूर्यघोषं घुष्टजयारवः ॥ ३८ ॥
विधायावभृथेष्टिं स व्यसृजत्सलिलाशये ।
सोमावलिप्तपात्राणि ततः स्नानमुपाचरत् ॥ ३९ ॥
नाभूदवभृथस्नानात्पूतात्मा केवलं नृपः ।
सह स्नानं प्रकुर्वन्तः सर्वेऽपि जगतीसुराः ॥ ४० ॥
दीक्षाविमोकमादाय नारायणमहीपतिः ।
व्यधादुदवसानीयामिष्टिमृत्विक्समन्वितः ॥ ४१ ॥

विधाय विधिमार्गेण प्रापणीयेष्टिमप्यसौ ।
समकल्पयदानन्दसिन्धुर्ब्राह्मणतर्पणम् ॥ ४२ ॥
नारायणमहीपालः कलिकालविजित्वरः ।
अनिवारितमन्नानि भूमिदेवानभोजयत् ॥ ४३ ॥
भूमिभिर्भूषणैः स्वर्णैर्वसनैरशनैर्गृहैः ।
सकलानपि भूदेवान्भूपालः पर्यपूजयत् ॥ ४४ ॥
अथ पत्नीयुतो राजा मयूरगिरिमण्डनम् ।
धर्ममूर्त्तिः समायातः सुन्दरं राजमन्दिरम् ॥ ४५ ॥
ततः कदाचिदानन्दभाजनीकृतभूजनः ।
तुलापुरुषदानानि कर्त्तुमैहत पार्थिवः ॥ ४६ ॥
अस्योत्कटतुलादानविधिकर्मविभाविनः ।
अमुष्य वपुषः पुष्टिमाशासत महीसुराः ॥ ४७ ॥
वेदवेदाङ्गपारीणानाहूय सकलद्विजान् ।
तुलापुरुषदानस्य सङ्कल्पमकरोन्नृपः ॥ ४८ ॥
सम्पूज्य विधिवत्पूतः सम्पूर्य धनसम्पदा ।
नारायणमहाराजस्तुलामध्यास्त निस्तुलः ॥ ४९ ॥
कस्तूरीतिलकोद्भासिभालभागस्तुलागतः ।
नृपः सर्वकलापूर्णः सुधाकर इव व्यभात् ॥ ५० ॥
राजा तुलागतः सर्वद्विजानन्दकरोदयः ।
विपक्षध्वान्तविध्वंसी सहस्रांशुरिव व्यभात् ॥ ५१ ॥
हेम्नो यदभवद्दुःखं गुञ्जया सह तोलनात् ।
तदपास्तमभूदस्य नृपेण सह तोलनात् ॥ ५२ ॥
तुलागतमहाराजनारायणमुखश्रियम् ।
कामप्याकर्ण्य शीतांशुः शङ्कया मलिनाननः ॥ ५३ ॥
विष्णोरंशेन चानेन हेम्नः संतोलनोचिता ।
ख्यातं भगवतोक्तं नु धातूनामस्मि काञ्चनम् ॥ ५४ ॥
सुवर्णं पीतमेवेति युक्तं मीमांसकोदितम् ।
अन्यथाऽनभिभूतस्याभिभूतेन कुतस्तुला ॥ ५५ ॥

स्तुवन्त्वस्य तुलादानविधिं केचन नो वयम् ।
ददतः स्वर्णममितं तुलादानविधिः कियान् ॥ ५६ ॥
नारायणतुलाभागं परिस्पृश्य करैः स्थिताः ।
अन्तःपुरकुरङ्गाक्ष्यः कमला इव रेजिरे ॥ ५७ ॥
नारायणतुलाभागमालम्बन्त मृगीदृशः ।
सपत्नीं तुलितां लक्ष्मीं लघूकर्त्तुमिव क्षणम् ॥ ५८ ॥
कलिकर्णावतारोऽसौ विविधां धनसम्पदम् ।
समस्तभूमिदेवेभ्यो व्यतरद्दानधर्मवित् ॥ ५९ ॥
ततः स्वीयतुलामात्रदानासन्तुष्टमानसः ।
स तुलापुरुषं पुत्रकलत्रैरप्यकारयत् ॥ ६० ॥
नारायण चिरं जीव चिरं पालय मेदिनीम् ।
चिरमाचर दानानि द्विजा इत्याशिषं ददुः ॥ ६१ ॥
मणिहारं पदे कण्ठे नूपुरं कङ्कणं श्रुतौ ।
ताटङ्कं मूर्ध्नि तद्भिक्षुबाला मूढास्स्म युञ्जते ॥ ६२ ॥
ततः कदाचित्समये वदान्यकुलनायकः ।
नृपः समगमत्पुण्यं मङ्गतुङ्गेश्वरालयम् ॥ ६३ ॥
तत्र कृष्णाजिनस्यापि दानमाधत्त पार्थिवः ।
यदीयमहिमा वाचां गुरोरपि न गोचरः ॥ ६४ ॥
स्वीचकार नृपादस्मात्कृष्णाजिनपरिग्रहम् ।
कुबेरस्पर्द्धया किन्तु वेदवेदाङ्गपारगः ॥ ६५ ॥
नारायणेति यन्नाम मोक्षाय परिकल्पते ।
तस्येदानीं करस्पर्शो नाल्पस्य तपसः फलम् ॥ ६६ ॥
यत्तु निन्दावचः प्राचामेतद्दानपरिग्रहे ।
तन्नावकाशं भजते नारायणपरायणे ॥ ६७ ॥
न भूयः पुरुषः स स्यादित्युक्तं युक्तमेव तत् ।
नारायणकृपापात्रे पुनरावर्त्तनं कुतः ॥ ६८ ॥
भवत्प्रतापदावाग्निज्वालान्तर्गतमिन्धनम् ।
शत्रुवृन्दमिवैनो म इत्युवाच नृपं द्विजः ॥ ६९ ॥

ततः क्षितिपतिस्तस्मै दक्षिणामददत्तदा ।
सुवर्णभूषिता धेनूर्हैमटङ्कांश्च भूरिशः ॥ ७० ॥

अथ रुद्रप्रसादाप्तसम्पदारोग्यसन्मतिः ।
द्विजानाहूय रुद्रस्य प्रारम्भमकरोन्नृपः ॥ ७१ ॥

प्रसूनतारापतिशालिमौलिः पाटीरभूतिस्पृहणीयगात्रः ।
ज्वलत्प्रतापानलमादधानो महीपतिः शम्भुरिव व्यराजत् ॥७२॥

विष्णो(रंशा)त्मनानेन शिवोऽहमिति भाविते ।
माधवोमाधवाद्वैते विश्वासः कस्य नाभवत् ॥ ७३ ॥

मेखलागुणनियन्त्रितमध्या पूर्णभूषितपयोधरकुम्भा ।
सङ्गता हुतहुताशनयूना कुण्डभूः प्रियतमेव विरेजे ॥ ७४ ॥

उदुम्बरादिद्रुमतोरणाढ्यः स्फुरत्पताकाकदलीसलीलः ।
शिवस्य सान्निध्यवशेन तुल्यः कैलासशैलेन स मण्डपोऽभूत् ॥७५॥

महीसुरा होमविधिं वितेनिरे दिवौकसस्तत्र हविर्ववल्भिरे ।
धनश्रियो भूमिपतेर्जजृम्भिरे सुमेरुमुख्या धनिनश्चकम्पिरे ॥७६॥

नरपतिर्नितरां मुदितं रवेर्वदनयोरपि युग्ममतर्पयत् ।
जपदशांशतया परमेकतो विगतसंख्यतया पुनरन्यतः ॥ ७७ ॥

एतेन क्षितिपालमौलिमणिना रत्नैर्धनैर्धेनुभिः
सौवर्णाभरणैरनेकवसनैः सम्भाविता इत्यमी ।
दारिद्र्यं किमु नः प्रदग्धममुना राज्ञः प्रतापाग्निना
किंचात्रागतरुद्रनेत्रशिखिना विप्राः स्म संशेरते ॥ ७८ ॥

अनेन धन्येन नितान्तमान्यैर्गजाश्वदानादिकभूमिदानैः ।
सर्वाणि दानप्रतिपादकानि शास्त्राणि सार्थानि चिरात्कृतानि ॥७९॥

आपूर्वाचलपश्चिमाचलयुगादाचन्दनक्ष्माधरा-
दागौरीगुरुभूधरादपि महीं सम्पादयन्विप्रसात् ।
कुर्वन्वैरिनरेन्द्रवृन्दरुधिरापूरैः शतं सागरा-
न्कीर्तिं भार्गवतोऽधिकां समचिनोन्नारायणक्ष्मापतिः॥ ८० ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्ये यागविधानवर्णनपरः सर्गोऽयमष्टादशः ॥ ८१ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरो-
जमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्रकवी-
न्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये तुलापुरुषसोमयागादिविवि-
धधर्मवर्णनं नामाष्टादशः सर्गः ॥

---

## एकोनविंशः सर्गः ।

अकब्बरक्षोणिपतेस्तनूजः ससैनिको दक्षिणदिग्जयाय ।
रेवातटे शाहमुरादनामा ततो भृगुक्षेत्रमुपाजगाम ॥ १ ॥
अकब्बरक्षोणिपुरन्दरेण सम्प्रेषितं प्रीतिविशेषलेखम् ।
काश्मीरवासोयुगुलं महार्हं तथा सितं सैन्धवमेकमश्वम् ॥ २ ॥
स्वस्यापि तद्वत्प्रणयोपहारं प्रदाय मुख्यं निजमेकवीरम् ।
नारायणक्षोणिपतेः समीपे सम्प्रेषयामास मुरादशाहः ॥ ३ ॥
ततः परं शाहमुरादमन्त्री सद्यः समागत्य मयूरशैलम् ।
नारायणक्षोणिपतेः पुरस्तात्सोपायनं लेखमदादुदारम् ॥ ४ ॥
भ्रातुः सुतोऽहं भवदाश्रयेण त(त्व)त्रागतो दक्षिणदिग्जयाय ।
आर्येण तत्रोचितमाशु कार्यमित्याद्यसौ वाचयति स्म लेखम् ॥५॥
अकब्बरप्रेमनिदेशमेनं तथेत्युरीकृत्य महीमहेन्द्रः ।
ताम्बूलचेलप्रमुखप्रदानैर्दानैकशूरः समभावयत्तम् ॥ ६ ॥
तत्र स्थितः शाहमुरादभूपो रिपुक्षये मन्त्रविवक्षयाऽसौ ।
राजन्समाकांक्षति दर्शनं ते नरेन्द्रमित्याह तदा स मन्त्री ॥ ७ ॥
इत्थं समासाद्य वचस्तदीयं शुभे मुहूर्ते कृतमङ्गलश्रीः ।
सेनाविरावैर्जयतूर्यनादैर्व्याप्ताम्बरः प्रास्थित राजसिंहः ॥ ८ ॥

अनुप्रयान्तीः प्रणयप्रकर्षान्मृगीदृशो जैत्रपुरान्निवर्त्य ।
नाम्ना पुरी पञ्चमुखीति तापीतटोपकण्ठे समवायि राज्ञा ॥ ९॥
प्रतापशाहं युवराजमेकं हरं द्वितीयं हरिशब्दपूर्वम् ।
अनुव्रजन्तौ तनयौ विसृज्य पुरोऽगमत्पञ्चमुखीनगर्याः ॥ १० ॥
श्रीशाहनारायणमेदिनीन्द्रः सद्यः समासाद्य ततोऽङ्कलेशम् ।
न्यवेशयत्तत्र विचित्रघोषं सैन्यं रजोधूसरकेतु राजा ॥ ११ ॥
तत्रागतं शाहमुरादभूपः शुश्राव तं सम्प्रति नोच्यते तत् ।
यदाऽचलच्चैष मयूरशैलात्तदादि वार्तां जगृहे स वीरः ॥ १२ ॥
अथैष नानाविधखाद्यजातं राजोचितं तस्य करे प्रदाय ।
मयूरशैलाधिपतेः समीपे सम्प्रेषयामास निजप्रधानम् ॥ १३ ॥
स मन्त्रिमुख्यः प्रचुरोपहारं समर्प्य नारायणपार्थिवाय ।
स्वस्वामिनः प्रेमविशेषवादानचीकथद्गौरवसप्रसादान् ॥ १४ ॥
मुरादशाहस्य पुरस्कृताय तस्मै नरेन्द्रः कुशलान्यपृच्छत् ।
आर्य त्वदीयप्रणयास्पदेऽस्मिन्कुतोऽशुभानीत्ययमप्युवाच ॥ १५ ॥
ततः परं शाहमुरादभूपः श्रीशाहनारायणपार्थिवाय ।
अपाररेवाजलमुत्तरीतुं ताः प्रेषयामास तरीः स्वकीयाः ॥ १६ ॥
यासु प्रतुङ्गा गुणवृक्षराजी महापताकावसनच्छलेन ।
पितुर्हिमांशोर्मिलनाय यान्त्या निःश्रेणिवद्राजति नर्मदायाः॥१७॥
ताभिस्तरीभिः सुतरामगाधामुत्तीर्य रेवां सह वाहिनीभिः ।
उड्डीनहंसावलिचक्रवाकं स राजहीरः परतीरमागात् ॥ १८ ॥
अकब्बरक्षोणिपतेः कुमारः सगौरवं गौरवनन्दनाय ।
सद्यः समादिश्य निजाश्ववर्यं रम्यां महार्हां शिबिकां दिदेश॥१९॥
नारायणक्षोणिपतिस्तदानीं विवे(?भू)षितं तस्य निवासमागात् ।
मुरादशाहोऽपि घनप्रमोदादुपाचरत्तं गुरुगौरवेण ॥ २० ॥
ततो महार्हासनसंस्थितोऽयं नारायणक्षोणिपुरन्दराय ।
सुवर्णमाणिक्यमणिप्रणीतं स वीटिकापूर्णमदत्त पात्रम् ॥ २१ ॥
परस्परालोकनजातहर्षप्रकर्षभास्वद्वदनारविन्दौ ।
सुखं निषण्णौ प्रचुरानुरागादपृच्छतां क्षेमभरं मिथस्तौ ॥ २२ ॥

कस्तूरिकाचन्दनकुङ्कुमाद्यैः सुगन्धिभिर्द्रव्यभरैरनेकैः ।
सम्पूज्य नारायणशाहमूचे दिल्लीपतेः सूनुरतिप्रतीतः ॥ २३ ॥
पराजितानेकनराधिपस्य सर्वार्थवर्यस्य सतां मतस्य ।
नारायणक्षोणिपतेर्निदेशात्कार्याणि सर्वाणि समाचर त्वम् ॥२४॥
एवं समादिश्य विशिष्य राजा दिल्लीपतिर्निर्जितसर्वदेशः ।
निजामशाहक्षितिपालराज्यं विजेतुमायुङ्क्त ससैनिकं माम् ॥२५॥
अकब्बरक्षोणिभुजाऽत्र युक्तं यत्प्रेषितोऽहं भवदाश्रयेण ।
नारायणानुग्रहमन्तराऽसौ जीयेत याम्या कथमन्यथा दिक् ॥२६॥
अतः परं किं क्रियतामिदानीं तन्मे भवान् शंसतु कार्यमार्यः ।
सतां विमर्षेण कथं हि कार्यं फलोपधानाय भवेदवश्यम् ॥ २७ ॥
एवं मुरादक्षितिपालवाचं निशम्य नारायणराजसिंहः ।
युक्त्यन्विताभिर्मितवाक्सुधाभिर्मुखारविन्दं समयुङ्क्त सम्यक् ॥ २८ ॥
अकब्बरक्षोणिपतेः प्रभावात्किं किं न साध्यं जगतीतलेऽस्मिन् ।
तथाऽपि शक्तित्रयमण्डितोऽपि विचार्य कुर्यादिति राजनीतिः ॥२९॥
सहस्ररश्मेरपि यत्र तेजो मन्दायते का नु कथा परेषाम् ।
नरेन्द्र तस्यां दिशि दक्षिणस्यां त्वया प्रयाणं सहसा न कार्यम् ॥३०॥
चारा विधेयेषु नितान्तदक्षास्तीर्थैः किलान्तः पदमाशु कृत्वा ।
प्रत्यर्थिपृथ्वीपतिमण्डलस्य जलाशयस्येव तलं विदन्तु ॥ ३१ ॥
अयं प्रयाणप्रतिबन्धहेतुर्बलाहकानां समयोऽपि यातु ।
शरत्समायास्यति चेयमारात्साक्षाज्जयश्रीरिव भूपतीनाम् ॥३२॥
परेतरेभ्यः सकलं चरेभ्यो विज्ञाय वृत्तं प्रतिभूमिभर्तुः ।
विधेहि राजन्शरदि प्रयाणं विजेष्यसे सर्वरिपून्पितेव ॥ ३३ ॥
स एष देशश्च तवैव पित्रा पुरा जितस्तेन महारथेन ।
ततो भृगुक्षेत्रपुरे त्वयाऽस्मिन्संस्थीयतां तावदिदं मतं नः ॥ ३४ ॥
इत्थं समाकर्ण्य (नयप्रधानां) मयूरशैलाधिपतेर्गिरं ताम् ।
मुदाऽन्वितः शाहमुरादवीरः साकूतमङ्गीकुरुते स्म धीरः ॥ ३५ ॥
मनोहरानोकहवाटिकायां विस्तारितानि स्वयमात्मवर्गैः ।
नारायणक्षोणिपतिं नरेन्द्रः प्रस्थापयामास पटीगृहाणि ॥ ३६ ॥

यथोचितं स्वीयधनुर्धरेभ्यो दत्वा निवासं शिखिशैलराजः ।
पटोपकार्यां रचितोपचारां दत्तोपहारां सुखमध्यतिष्ठत् ॥ ३७ ॥
कुबेरदिग्भूमिपतेः कुमारो दिने दिने प्रेषयति स्म तस्मै ।
खाद्यान्यनेकानि तथा सुगन्धिद्रव्याणि चान्यानि मनोहराणि ॥३८॥
तयोर्महीमण्डनयोस्तदानीमभूदद्वत्तान्यकथाप्रसङ्गा ।
दिने दिने काचन वर्तमाना संवादसन्दोहकुतूहलश्रीः ॥ ३९ ॥
अत्रान्तरे शाहमुरादभूपमापृच्छ्य नारायणभूमिपालः ।
रेवातटे माधवकृष्णभू(?पू)ते ससैनिकः प्रास्थित शुक्लतीर्थम् ॥ ४० ॥
तत्तीर्थमासाद्य नृपः प्रभाते तुङ्गं पटागारमथो वितत्य ।
समागतैस्तैर्थिकविप्रवृन्दैरावेष्टितः स्नानसमुत्सुकोऽभूत् ॥ ४१ ॥
कराम्बुजं शार्ङ्गधरद्विजस्य तथाऽन्यतो लक्ष्मणपण्डितस्य ।
प्रेम्णा समालम्ब्य करद्वयेन स नर्मदावारिणि मङ्क्षुमागात् ॥ ४२ ॥
यथाविधि स्नानविधौ प्रणीते विधाय सन्ध्यापितृतर्पणादि ।
सद्यः समस्तेप्सितदानसिद्धं गोपालमन्त्रं जपति स्म राजा ॥ ४३ ॥
महीपतिस्तत्र यथाविधानं महाष्टदानादिविधिं विधाय ।
गवां शतं काञ्चनमालिनीनां धनं धनं च व्यतरद्द्विजेभ्यः ॥ ४४ ॥
भूमीभुजा भूरिसुवर्णवृष्ट्या पीते कृतेऽस्मिन्सति शुक्लतीर्थे ।
न ज्ञातवानस्मि किमद्य मार्गं व्यासः समेतोऽपि मुहुर्मुमोह ॥४५॥
सुवर्णभारं ददतोऽस्य राज्ञो रत्नाङ्गुलीयं सुतरां विरेजे ।
चिन्तामणिस्तत्करदानदीक्षाशिक्षार्थमायात इति प्रतीमः ॥ ४६ ॥
पूर्वं हि चाणाख्यनृपेण तीर्थे यत्रोद्धृतं तत्र नराधिपेन ।
द्विजन्मनां दत्त······भाग्यं चिरस्य कालादुदधारि भूयः ॥ ४७ ॥
हुङ्कारविश्वेश्वरमादिदेवं श्रीश्वेतवाराहमहेश्वरं च ।
रत्नैः सुवर्णैर्विविधोपचारैरपूजयत्तत्र नृपो यथावत् ॥ ४८ ॥
सानन्दमन्यानपि देववर्यान्सम्पूज्य नारायणसार्वभौमः ।
सहस्रशस्तत्र च भूमिदेवानभोजयन्नार्मदतीरदेशे ॥ ४९ ॥
आकर्ण्य नारायणभूमिभर्तुर्लोकोत्तरं दानकुतूहलं तत् ।
तरीरधिष्ठाय मुरादशाहो विलोकितुं सत्वरमाजगाम ॥ ५० ॥

तद्दर्शनाद्विस्मयदत्तचित्ते तस्मिन्गते शाहमुरादभूपे ।
आचार्यगङ्गाधरमुख्यविप्रान्नृपः समाहूय बहूनवादीत् ॥ ५१ ॥
दिल्लीशसूनुप्रणयानुरोधात्तूर्णं भृगुक्षेत्रमहं व्रजामि ।
युष्मान्वृणोमि प्रयतानिदानीं गोपालमन्त्रस्य जपाय विप्राः ॥५२॥
एतस्य मन्त्रस्य जपं भवद्भिर्होमादि सर्वाङ्गयुतं विधाय ।
तस्मिन्भृगुक्षेत्रपुरे मदर्थं श्रेयः प्रदातुं क्रियतां प्रसादः ॥ ५३ ॥
तथेत्युरीकृत्य नरेन्द्रवाचं हर्षप्रकर्षोज्ज्वलवक्त्रशोभाः ।
आरेभिरे मन्त्रजपं यथावद्रेवातटे मन्त्रविभागविज्ञाः ॥ ५४ ॥
ततो भृगुक्षेत्रमुपेत्य राजा सोमेश्वरं पूजयति स्म सम्यक् ।
स्वप्ने वितीर्णप्रचुरप्रसादां सर्वोपचारैरथ सिन्धुदेवीम् ॥ ५५ ॥
परस्परालोकनजायमानलोकोत्तरानन्दकुतूहलश्रीः ।
भूमण्डलाखण्डलयोस्तदानीमखण्डिता काऽपि पुनर्बभूव ॥ ५६ ॥
क्रीडाप्रसङ्गेन ततः कदाचिन्नारायणाय क्षितिनायकाय ।
प्रचण्डदन्तावलयूथयुद्धं सन्दर्शयामास मुरादशाहः ॥ ५७ ॥
तत्रान्तरे निर्मलशुक्लतीर्थादुपागतेभ्यो धरणीसुरेभ्यः ।
रेवातटे धाम्नि पितामहस्य श्रेयोऽग्रहीद्वैरवभूपसूनुः ॥ ५८ ॥
पद्मैः समेतं दशभिर्महीन्द्रः सुवर्णटङ्कद्वितयं द्विजेभ्यः ।
सम्पाद्य पूजामथ दक्षिणार्थे सानन्दमेकैकमदादुदारः ॥ ५९ ॥
ततः परं शाहमुरादवीरो मयूरशैलं प्रति गन्तुकामम् ।
विज्ञाय नारायणराजसिंहं संभावयामास सवीरवर्गम् ॥ ६० ॥

वासांसि सप्तगुणितानि नृपोचितानि
श्रीमन्ति मूल्यरहितानि च भूषणानि ।
रत्नौघकाञ्चननिबद्धपिधानकोशं
जाज्वल्यमानमतुलं करवालमेकम् ॥ ६१ ॥
दानाम्बुगन्धभरलुब्धमिलिन्दवृन्द-
क्रोधोद्धुरद्विरदयूथमृगेन्द्रतुङ्गम् ।
उद्दामदर्पजितगंधवहांश्च वाहा-
नस्मै ददौ परमकब्बरराजसूनुः ॥ ६२ ॥

यथोचितं भैरवनन्दनस्य प्रवीरवर्गानपि भूरिहर्षान् ।
वस्त्रैः सुवर्णैर्मणिभिस्तुरङ्गैः सम्भावयामास मुरादशाहः ॥ ६३ ॥
अथ तत्र कुबेरदिङ्नियन्तुः सुतमामन्त्र्य पवित्रनम्रमूर्तिम् ।
शिखिभूधरवर्त्तिराजधानीमगमद्भैरवनन्दनः ससैन्यः ॥ ६४ ॥
श्रीशाहनारायणविप्रयोगादकब्बरक्षोणिपतेः कुमारः ।
नितान्तचिन्ताकुलमानसोऽभूत्सतां वियोगाद्धि परो न खेदः ॥६५॥
तापीतटे पिप्पलवाटिकापुरीमासाद्य नारायणमेदिनीपतिः ।
स्नानादिकं तीर्थविधिं यथोदितं तत्रापि कृत्वा विघसं स्म सेवते॥६६॥
तत्रैकरात्रं प्रणयादुषित्वा सवारिसङ्घं पुनरभ्युपेतः ।
अत्रान्तरे दर्शनलोलचित्तः प्रतापशाहोऽपि पुरः समेतः ॥ ६७ ॥
प्रतापशाहो मुदिताननश्रीर्गुरोरवन्दिष्ट पदारविन्दम् ।
तत्रत्यवृत्तान्तममुं सुताय न्यवेदयत्सर्वमथ क्षितीशः ॥ ६८ ॥
नीराजितः पौरसुवासिनीजनैः सनन्दनो बन्दिजनाभिनन्दितः ।
गृहे गृहे बद्धदुकूलतोरणां पुरीं विशालामविशद्विशांपतिः॥६९॥
उन्मीलत्कीर्तिपूरं मलयजमधुरं दिग्वधूनां वितन्वन्
जातीमल्लीमतल्लीविकसितकुसुमस्तोमकर्णावतंसम् ।
कुर्वन्नानन्दसान्द्रानपि निखिलजनान्नीतिभिर्मानवीभिः
प्राज्यं साम्राज्यसौख्यं सततमभजत श्रीयमाम्बातनूजः ॥ ७० ॥
श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽकब्बरसूनुसङ्गरसिकः सर्गोऽङ्कभूमीमितः ॥ ७१ ॥

॥ इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचिचुम्बितचरणसरो-
जमयूरगिरिकेसरिश्रीमहाराजनारायणशाहोद्योजितदाक्षिणात्यरुद्र-
कवीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये शाहमुरादसमागम-
कौतुको नाम एकोनविंशतितमः सर्गः ॥

## विंशः सर्गः ।

ततः शरत्कालमवाप्य दिल्लीपतेः सुतो दक्षिणदिग्जयाय ।
जगाम सैन्यैः सह दूतमेकं प्रस्थाप्य नारायणपार्थिवाय ॥ १ ॥
कुबेरदिङ्नाथतनूजदूतः समेत्य सद्यः शिखिराजधानीम् ।
कृतप्रणामो निहितोपहारः श्रीशाहनारायणमित्थमूचे ॥ २ ॥
महीपतेः शाहमुरादभूपः प्रतीक्ष्य कालं भवतोपदिष्टम् ।
निजामशाहक्षितिपालदेशं सम्प्रस्थितः सम्प्रति सैन्ययुक्तः ॥३॥
तस्मिन्महाकर्मणि राजसूनुः सहायमाकाङ्क्षति जित्वरं त्वाम् ।
सा दक्षिणा दिक् क्षितिपालमौलेस्तव प्रतापेन विना न जेया ॥४॥
मत्स्वामिनः कार्यमकर्तुमेतद्भवानहो नार्हति सर्वथैव ।
केषां न किं किं कृतमार्यवर्यैः सहायकार्यं भवदीयपूर्वैः ॥ ५ ॥
विजित्य दिल्लीपतिपार्थिवाय दत्ते त्वया दक्षिणदिक्प्रदेशे ।
गास्यन्ति सर्वेऽपि यशस्तवोच्चैरतः परः को ननु दीर्घलाभः ॥ ६ ॥
जयोदयो याम्यदिशः समन्तात्पीयूषपूरोपमकीर्त्तिलाभः ।
अकब्बरो मित्रमिति त्वदीयां सौभाग्यशोभां न सहोऽस्मि वक्तुम् ॥७॥
अलं विलम्ब्य क्षितिपालमौले तुरङ्गमङ्गीकुरु सांयुगीनम् ।
आलिङ्गितुं त्वां तरसा जयश्रीरुत्कण्ठते वासकसज्जिकेव ॥ ८ ॥
आदाय तां दूतवरस्य वाचं नम्रं निषण्णं निकटे नृपस्य ।
प्रतापशाहं प्रभयाऽनुमेया समाययौ काचन वीरलक्ष्मीः ॥ ९ ॥
निरन्तरध्यातमुरारिमूर्तिर्वीरश्रियाऽऽलिङ्गितचारुमूर्तिः ।
प्रतापशाहः प्रथितप्रतापः प्रणम्य राजानमिदं न्यगादीत् ॥ १० ॥
आर्य त्वया दिग्वलयं विजित्य स्वयं यशोभिः समपूरि भूरि ।
इह प्रतापं विनियुज्य कार्ये कीर्तिं तदेकांतरितां विधेहि ॥ ११ ॥
तव प्रभावादनुलेपिकार्ये भृत्यो लघीयानपि नैति भङ्गम् ।
भूपालपञ्चानन तावकीने कुतः किशोरे विजयान्यशङ्का ॥ १२ ॥
ममापि नायं जननाथ धर्मो यद्ध्रियमाने मयि यूनसूनौ ।
सहस्रशो निर्जितवैरिवृन्दः पुनः प्रयासि त्वमरीन्विजेतुम् ॥१३॥

इति ब्रुवाणाय बृहद्भुजाय निवारितायापि कृताग्रहाय ।
प्रतापशाहाय महीमहेन्द्रस्तथेति सन्देशमदात्तदानीम् ॥ १४ ॥
श्रीशाहनारायणराजसिंहं गङ्गाभिधानां जननीं च नत्वा ।
आपृच्छय सर्वानपि बन्धुवर्गानसावगाच्छार्ङ्गधरस्य गेहम् ॥१५॥
तत्रैष नारायणराजसूनुः सम्प्राप्तमन्त्राक्षतमङ्गलश्रीः ।
सलक्ष्मणं शार्ङ्गधरद्विजेन्द्रं प्रणम्य चालिङ्ग्य चिरादनन्दत् ॥१६॥
राष्ट्रौढवंशे तिलकायमानः पितेव राजन्विजयीभवेति ।
भूदेवयोर्द्रागनयोरुदारां प्रसन्नयोराशिषमग्रहीत्सः ॥ १७ ॥
दिगन्तरालं रणतूर्यनादे विगाहमाने विजये मुहूर्ते ।
प्रतापशाहश्चतुरङ्गसेनासमन्वितः श्वेतहयं व्यरोहत् ॥ १८ ॥
ताम्बूलसम्पूर्णमुखीं प्रसन्नां लीलाम्बुजं पाणितले दधानाम् ।
तारुण्यपूर्णां स्तनहेमकुम्भामसावपश्यत्पुरतो मृगाक्षीम् ॥ १९ ॥
कुर्वन्नभो भूतलवद्रजोभिर्भुवं नभोवद्गजमेघसङ्घैः ।
प्रतापशाहस्य महारथस्य वरूथिनीनां स रराज भारः ॥ २० ॥
दिल्लीशशालाचलसार्वभौमकुमारयोरश्विसमानभासोः ।
महापुरे धायिटनाम्नि रम्ये तयोरभूद्दर्शनकौतुकश्रीः ॥ २१ ॥
गजैस्तुरङ्गैर्वसनैरनेकैः सुवर्णरत्नाभरणैरुदारैः ।
तौ राजवीरौ मुदितौ नितान्तं मिथः स्म सम्भावयतस्तदानीम् ॥२२॥
ततः परं शाहमुरादभूपः प्रतापशाहं निजगाद वीरम् ।
आर्यः स नारायणसार्वभौमो बिभर्ति कच्चित्कुशली धरित्रीम् ॥२३॥
पुरा मयूराद्रिपतेरमुष्य गुरोः पुरस्तादवसं सशङ्कः ।
महारथं त्वामधुना वयस्यं सम्प्राप्य सम्पूर्णमनोरथोऽस्मि ॥ २४ ॥
बलेन रूपेण च कामकल्पं सहायमासाद्य सखे भवन्तम् ।
मन्येऽधुना दक्षिणदिङ्मृगाक्षीमालिङ्गितामेव करेऽवलम्ब्य ॥ २५ ॥
निशम्य तां शाहमुरादवाचं प्रतापशाहः स्मितपूर्वमाह ।
त्वत्प्रेमपीयूषनिमग्नचित्ते ताते न वार्ताऽपि शिवेतरस्य ॥ २६ ॥
रणाङ्गणं याति तव प्रतापे के नाम सेनापतयो रिपूणाम् ।
नभोङ्गणं भास्वति गाहमाने दिङ्मण्डले कोनु तमोऽवकाशः ॥ २७ ॥

दिल्लीशकण्ठीरवसूनुना तत्पुरः प्रयाणं क्रियतामिदानीम् ।
अलं समालम्ब्य विलम्बमस्मिन्नरातिभूपालपदापहारे ॥ २८ ॥
प्रतापशाहस्य गिरं गभीरामित्थं समाकर्ण्य नितान्ततुष्टः ।
मुरादशाहः कृतवैरिदाहस्ततः प्रतस्थे नगरात्ससैन्यः ॥ २९ ॥
तौ राजवीरौ रणरङ्गधीरौ कुलैकहीरौ तरसा समीरौ ।
महापुरे नन्दुरबारसंज्ञे सानन्दमेकां वसतिं व्यधाताम् ॥ ३० ॥
ततः परं नेरपुरे मनोज्ञे नीत्वैकरात्रं धरणीमहेन्द्रौ ।
प्रत्यर्थिनां गालनशैलदेशं समेत्य सोल्लुण्ठमलुण्ठतां तौ ॥ ३१ ॥
अत्रान्तरे यो नृपखानखानो यः शाहबाजादिमखानकम्बुः ।
वीराविमौ द्वावपि खानदेशान्मीरान्वितौ निर्ययतुः ससैन्यौ ॥३२॥
कोपाकुलं स्वीयविलम्बदोषात्प्रतापशाहं समवाप्य मित्रम् ।
अन्यानपेक्षं च मुरादशाहं निशम्य ते वेगभरं वितेनुः ॥ ३३ ॥
श्रान्तान्महेभान्कियतस्तुरङ्गानुपेक्ष्य वर्त्मन्यपि पत्तिसङ्घान् ।
अमी पुरे पारवदाभिधाने जवान्मिलन्ति स्म मुरादशाहम् ॥३४॥
मुरादशाहक्षितिपेन रोषाददित्सितं दर्शनमप्युदारम् ।
प्रतापशाहः प्रतिबोध्य चैनान्बलात्पुरस्कारयति स्म वीरान्॥३५॥
श्रीखानखानोऽथ नृपं ययाचे मीरस्य सेनामुखनायकत्वम् ।
प्रतापशाहाय पुरैव चैतद्दत्तं मयेति क्षितिपोऽप्यवोचत् ॥ ३६ ॥
श्रीखानखानस्य गुणप्रियस्य प्रतापशाहस्य गुणास्पदस्य ।
दिने दिने चन्द्रकलेव रम्या संवर्द्धमानाऽथ बभूव मैत्री ॥ ३७ ॥
ततः पुरं पारवदाभिधानं निश्शेषविप्रोषितपौरवर्गम् ।
ते धीरवीराः परिलुण्ठ्य सर्वं भस्मावशेषं व्यदधुः क्षणेन ॥३८॥
ततः परार्द्धाधिकसैन्यभारास्तं कूर्परग्राममवापुरेते ।
यस्मिन्नहो पश्चिमवाहिनी सा गोदावरी नाम नदी चकास्ति॥३९॥
सरोजनेत्रां दरफेनहासां मरालमञ्जीरविरावमञ्जुम् ।
प्रतापशाहः समवेक्ष्य गोदां स्वमातरं संस्मरति स्म गङ्गाम् ॥४०॥
तत्रैष नारायणशाहसूनुः स्नानादिकार्यं विधिवद्विधाय ।
रत्नैः सुवर्णैर्वसनैः समन्त्रं शुक्लेश्वरं पूजयति स्म देवम् ॥ ४१ ॥

प्रतापशाहेन महीसुरेभ्यो न केवलं निर्भयमेव तत्र ।
सुवर्णरत्नोत्करगोसहस्रद्विपेन्द्रवाहाद्यपि दत्तमासीत् ॥ ४२ ॥
मुरादशाहक्षितिपेन तत्र ग्रामे समग्रा समहारि सम्पत् ।
प्रतापशाहेन तु दाननीरव्ययेन गङ्गैव परं व्यलुण्ठि ॥ ४३ ॥
प्रतापशाहक्षितिपेन सार्द्धं ततः परं शाहमुरादवीरः ।
खेटानि मार्गे परिलुण्ठ्य पुण्यस्तम्भाभिधानं नगरं समेतः ॥४४॥
प्रतापशाहक्षितिपालसिंहस्तत्रापि गोदासलिले निमज्ज्य ।
भूदेवतेभ्यो बहुदत्तवित्तो विश्वेश्वरं प्रीणयति स्म भक्त्या ॥ ४५ ॥
अथ प्रवृत्तेषु पुरस्य पुण्यस्तम्भस्य दाहाय महारथेषु ।
प्रतापशाहः करुणार्द्रचित्तो न्यवारयत्तान्विविधैरुपायैः ॥ ४६ ॥
अनेकभूदेवनिकेतनानां संरक्षणं यत्कृतमादरेण ।
गङ्गावतीसूनुरगादुदारं तेन ध्रुवं मन्दिरदानधर्मम् ॥ ४७ ॥
पलायिताशेषजनं पुरं तद्भटास्तदा हन्त हठादलुण्ठन् ।
प्रतापशाहः प्रचुरप्रतापो न चाहरत्तैर्थिकमर्थलेशम् ॥ ४८ ॥
ततः परं बिल्वपुरं मनोज्ञं देवालयालीं च पुरं प्रवीराः ।
राधापुरीं प्राप्य ततस्तु नन्दिग्रामं विरामं समयाम्बभूवुः ॥४९॥
सर्वाण्यपि ग्रामपुराणि मार्गे समन्ततस्ते परिलुण्ठ्य शूराः ।
अथाह्मदाख्यं नगरं विशालं तत्रस्थभूपस्य जवादवापुः ॥ ५० ॥
तत्रौषधापूरितयुद्धयन्त्रैः स्फुरद्धनुर्बाणकृपाणकुन्तैः ।
आगस्त्यदिङ्नाथनिवासभूतं दुर्गं समन्तादथ तैररोधि ॥ ५१ ॥
शितशरैरुपलैरथनालिकाविनिहितज्वलदायसगोलकैः ।
मिलितयोरुभयोरथ सेनयोः प्रववृते समरस्तुमुलस्तयोः ॥ ५२ ॥

दैवं चेदनुकूलमेव हि तदा पाणौ जयश्रीरियं
नो चेत्केलिनिकेतनेऽपि सहसा भङ्गो भवेन्निश्चितम् ।
केऽमी नाम विपक्षवीरनिकराः सारं विचार्यादरा-
दित्थं योद्धुमगात्प्रतापधरणीपालः करालः स्वयम् ॥ ५३ ॥

वेगप्रकर्षादनवेक्षणीयतूणीरबाणाहरणप्रबन्धः ।
आकर्णमाकृष्टशरासनोऽसौ सहस्रशस्तत्र शरानमुञ्चत् ॥ ५४ ॥

निरन्तरास्ते पिहितार्कबिम्बाः शरा विरेजुर्वियति व्रजन्तः ।
महाभुजङ्गा इव भोक्तुकामाः प्राणाख्यवायूनरिसैनिकानाम् ॥५५॥

केऽपि च्छिन्नभुजालताः कतिचन व्यालूननासापुटाः
केचिद्ध्वस्तविलोचनाः कतिपये निर्भग्नभालस्थलाः ।
केऽपि त्रोटितपाटितोष्ठदशना विच्छिन्नशीर्षाः परे
शत्रोः सैन्यचराः प्रतापधरणीपालस्य बाणैः कृताः ॥ ५६ ॥

पीनोत्तुङ्गघनस्तनाः सुवदनाः सम्प्राप्य वातायनं
भ्रूकोदण्डचलत्कटाक्षविशिखश्रेणीभिरेणीदृशः ।
साहाय्यस्य चिकीर्षयेव कलये प्राणेश्वराणां तदा
कन्दर्पप्रतिमं प्रतापनृपतिं व्यालोकयाञ्चक्रिरे ॥ ५७ ॥

उन्मीलज्जयतूर्यनादकलिते धूलीपटीमण्डपे
सङ्ग्रामोत्सवधाम्नि कुञ्जरघटाघण्टारवैर्नादिते ।
श्यामायाः करवालवल्लिसदृशः पाणिग्रहं कौतुकी
सानन्दं व्यदधात्प्रतापधरणीपालो विशालोदयः ॥ ५८ ॥

प्रचण्डकाष्ठैरुपलैर्विशालैरापूर्य सद्यः परिखामगाधाम् ।
प्रतापशाहः प्रतिवीरदुर्गप्राकारमारोहदुदारवीर्यः ॥ ५९ ॥

अनया करवालधारया परिलूनैररिमस्तकोत्करैः ।
परिपूज्य स भूमिदेवतामगमत्कीर्त्तिमयं महावरम् ॥ ६० ॥

उद्घूर्णखड्गहतलोहशिरस्त्रनिर्य-
द्वह्निस्फुलिङ्गकवलीकृतवक्त्रनेत्रम् ।
भूयः प्रतापनृपतिः प्रतिवीरमाघ्नन्
भूरिस्तुतोऽरिभिरितो विजयः परः कः ॥ ६१ ॥

केचित्प्रतापनृपबाहुबलप्रसादा-
न्नाकं समेत्य समरव्यथितौ व्यधाताम् ।
तत्राप्यहो कलहमेकसुराङ्गनार्थे
दैवं न मुञ्चति जनं जनना्न्तरेऽपि ॥ ६२ ॥

मतङ्गजाद्यैः सकलैर्बलाङ्गैरस्त्रैश्च शस्त्रैरखिलैः करालैः ।
प्रतिप्रवीराः प्रचुरप्रयत्नैः प्रतापशाहं प्रबलं प्रजह्रुः ॥ ६३ ॥

तत्कङ्कटे कोमलपद्मपत्रक्लीबत्वमापुर्द्विषदायुधानि ।
दैवेऽनुकूले सति सर्वमूले नूनं कृतान्तोऽपि न हन्तुमीष्टे ॥ ६४ ॥
तत्रान्तरे शाहमुरादभूपः प्रेमप्रकर्षाद्वयमीक्षमाणः ।
युध्यन्तमेकाकिनमेव दुर्गे प्रतापशाहं मुहुराजुहाव ॥ ६५ ॥
अथ प्रतापशाहोऽपि किं जातमिति सम्भ्रमात् ।
निषङ्गी कवची धन्वी तस्यान्तिकमुपागमत् ॥ ६६ ॥
अथ शाहमुरादभूमिपालो मुदितः प्राह वचः प्रतापशाहम् ।
विजितैव न केवलं त्वया भूरपि पीयूषसगोत्रकीर्त्तिधौता ॥६७॥
लक्षशोऽपि च परीक्षितस्य यत्सन्मणेर्निकषघर्षणं पुनः ।
कामचारकरणं जडात्मनां नाह किं मनसि गाढमूढताम् ॥ ६८ ॥
सत्यं त्वमसि गाङ्गेयः क्षितावेकमहारथः ।
विगणय्य गणास्त्राणि यदेको हतवान्रिपून् ॥ ६९ ॥
नारायणकिशोरस्य न चित्रं विश्वतो जयः ।
चमत्कारि गणश्चैतज्जितो दुर्गाधिपोऽपि यत् ॥ ७० ॥
इति निगद्य मुरादधराधिपः पुलकपालिकरञ्जितविग्रहः ।
उपजुगूह नराधिपनन्दनं घनतरं नितरां जयतत्परम् ॥ ७१ ॥
ततः परं शाहमुरादवीरप्रतापभूमीपतिखानखानाः ।
प्रत्येकमातन्वत तत्र दुर्गप्राकारपाताय महासुरङ्गान् ॥ ७२ ॥
आपूर्य तानान्तरगर्त्तगर्भानतिप्रचण्डौषधधोरणीभिः ।
ज्वालाजटालीकृतवर्त्तिकाभिरुद्दीपयन्ति स्म नरेन्द्रसिंहाः ॥७३॥
अतिप्रतप्ताः प्रतिपन्थिदुर्गप्राकारपाषाणचयाः करालाः ।
समं समुत्पेतुरमी जनानामुत्पातशङ्कां हृदि धारयन्तः ॥ ७४ ॥
विरेजिरे वर्त्मनि वारिदानाममी प्रचण्डोपलगण्डशैलाः ।
शक्रोऽपि यान्वीक्ष्य पुनर्गिरीणां पक्षभ्रमादाशु दधार वज्रम्॥७५॥
विचित्रमासीद्वयमेव भूमौ विशालपाषाणपरम्परा यत् ।
श्रीराघवेणाम्भसि तारिता प्रागुत्पातिता च त्रिभिरेभिरद्य॥७६॥
ततः परं रम्यमुपायनीयमानीय नानाविधवस्तुजातम् ।
अनन्यगत्यात्मविदो विपक्षा वीरत्रयीं तां शरणं ययुस्ते ॥ ७७ ॥

प्रदीयतां सम्प्रति केवलं नः सौराज्यमेतत्प्रथमं प्रवीराः ।
तद्ग्राह्यमार्यैस्तु विराटराज्यं तानाहुरेवं रिपवः शरण्यान् ॥ ७८ ॥
अतः परं किं ननु भूरि भाग्यं यत्प्रार्थयन्ते रिपवः स्वयं नः ।
इत्थं परामृश्य तथेति चोक्त्वा विराटदेशं प्रति ते प्रचेलुः ॥७९॥

तत्तीर्थमथ ते यत्र मर्द्दितो लवणासुरः ।
प्रापुर्मार्गवशाद्वीरा मेघंकरपुरान्तिके ॥ ८० ॥

प्रतापशाहः किल तत्र तीर्थे स्नानादिकर्माणि विधाय सम्यक् ।
भूदेवदारिद्र्यकरालदैत्यं दानायुधैर्मर्दयति स्म सद्यः ॥ ८१ ॥
महारथास्तेऽथ विराटदेशे बालापुरं प्राप्य मनोऽभिरामम् ।
पुरोपमेयेषु पटालयेषु पर्जन्यकालं गमयाम्बभूवुः ॥ ८२ ॥
तीर्थेषु निश्शेषितविप्रदैन्यः प्रतापशाहः शमितारिसैन्यः ।
श्रीशाहनारायणराजसिंहसन्दर्शनोत्कण्ठितमानसोऽभूत् ॥ ८३ ॥
गुरुं समालोकितुकाममेनं विज्ञाय नारायणशाहसूनुम् ।
अवोचतां शाहमुरादराजश्रीखानखानक्षितिपौ तदानीम् ॥८४॥
यावच्चतुर्मासनिवासकारी पितुः समीपे त्वमुदारवीर्य ।
पुनः समायाहि यदिल्लखानराज्यापहाराय शरन्मुहूर्त्ते ॥ ८५ ॥
इत्थं निगद्य स्फुटमेकदेशराज्यं प्रतिश्रुत्य च तौ नरेन्द्रौ ।
रत्नैः सुवर्णैर्वसनैस्तुरङ्गैर्नागैश्च सम्भावयतः स्म वीरम् ॥ ८६ ॥
परिपृच्छ्य ततः प्रतापशाहः प्रणयी शाहमुरादखानखानौ ।
शिखिशैलविराजिराजधानीं गमिकर्मीकुरुते स्म भूरिसैन्यः ॥८७॥

श्रीमद्बागुलमेदिनीश्वरकुलालङ्कारचूडामणिः
प्रत्यर्थिक्षितिपान्धकारतरणिर्भूदेवचिन्तामणिः ।
लक्ष्मीकीर्त्तिसरस्वतीसुजनतासङ्केतकेलीगृहं
सोऽयं विश्वहितप्रतापधरणीपालः सुखं जीवतु ॥ ८८ ॥
पान्थान्पृच्छत्युदन्वानिति तटविहरद्राजहंसारवैर्यं
सानन्दं क्षेमतः किं क्षितिमिह विजयी शास्ति शाहप्रतापः ।
एतन्नाराचधारादलितरिपुवधूदृक्पयःपूरभूरि-
स्फारीभूताम्बुधारी कलशभवमुनेर्निर्भयः संवसामि ॥ ८९ ॥

ततो मयूराचलराजधानीमासाद्य नारायणसार्वभौमम् ।
प्रतापशाहः सुतरामकार्षीदानन्दपीयूषतरङ्गिणीशम् ॥ ९० ॥

श्रीनारायणनृपतेर्जयन्ति पुत्राश्चत्वारः प्रथम इह प्रतापशाहः ।
तस्यान्वक् स हरिहरश्चतुर्भुजाख्यस्तत्पश्चात्तदवर(जस्तु)राज-
सिंहः ॥ ९१ ॥

लोकलोचनचकोरसुधांशोः श्रीप्रतापनृपतेरपि सूनुः ।
सार्वभौमभजनीयगुणानामास्पदं जयति भैरवसेनः ॥ ९२ ॥

नारायणमहाराजकीर्तिपान्थमृगीदृशोः ।
इति काऽपि गिरां भव्या भङ्गी विजयतेतराम् ॥ ९३ ॥

का त्वं कीर्त्तिः किमीया शिखिगिरिनृपतेः क्व प्रयास्यम्बुराशिं
किं कार्यं श्रीनिदेशः कथय कथमये तात सिन्धो जडात्मन् ।
गाम्भीर्यौदार्यधार्ष्ट्यप्रमुखगुणगणं मत्पतिं मानुकार्षीः
त्वत्क्रोधान्मत्सपत्नीसदनविबुधसान्मामसौ यत्करोति ॥ ९४ ॥

श्रीनारायणशाहपार्थिवकुलोत्तंसाय सर्वाशिषा-
मावासाय सहर्षमाशिषमहो कां नूनमाशास्महे ।
अस्मै पण्डितवृन्दकामनिधये चेदायुराशास्महे
तन्नामाशिष एव सन्ततनिजावासार्थमाशासते ॥ ९५ ॥

यावल्लक्ष्मीकटाक्षो विलसति ललितः कैटभारेर्मुखेन्दौ
यावद्ब्रह्माण्डदीपस्तपति दिनमणिः कौमुदी यावदिन्दौ ।
वीरश्रीशाहनारायणधरणिपतिश्रेणिहीरस्य ताव-
द्वंशो विश्वावतंसो जगति विजयतां मेदिनीपालनाय ॥ ९६ ॥

आसीत्कोऽपि महीमहेन्द्रमुकुटालङ्कारहीरावली-
तेजःपुञ्जनितान्तरञ्जितपदः श्रीकेशवाख्यो बुधः ।
विद्वन्मण्डलमण्डनं समभवत्तस्मादनन्ताभिध-
स्तत्पुत्रो जगदम्बिकाङ्घ्रिकमलद्वन्द्वार्चनाप्राप्तधीः ॥ ९७ ॥

राष्ट्रौढक्षितिपालवंशमुकुटालङ्कारचूडामणि-
श्रीनारायणशाहजीवनविधेः सत्कीर्त्तिमुक्तावलीम्

विद्वत्कुण्डलभूषणानि विशदश्लोकैरगुम्फद्गुण-
स्फारैः पण्डितमण्डलाम्बुजरविः श्रीरुद्रनामा कविः ॥ ९८ ॥

निस्सारीयति सारिका पिककुलं रङ्कीयति व्याकुलं
हंसाली परमाकुलीयति शुकीमालाऽपि मूकीयति ।
यामाकर्ण्य किलाधरीयतितरां सौधाधरी माधुरी
सेयं काऽपि सरस्वती रसवती रुद्रस्य विद्योतते ॥ ९९ ॥

शाके भोगिशशीषुभू ( १५१८ ) परिमिते संवत्सरे दुर्मुखे
मासे चाश्वयुजे सितप्रतिपदि स्थाने मयूराचले ।
श्रीमल्लक्ष्मणपण्डितोदितकथामाकर्ण्य रुद्रः कविः
श्रीनारायणशाहकीर्त्तिरसिकं काव्यं व्यधान्निर्मलम् ॥ १०० ॥

श्रीमद्बागुलभूमिपालतिलकश्रीशाहनारायण-
स्फूर्जत्कीर्त्तिचरित्रचित्रितपदे राष्ट्रौढवंशाभिधे ।
भव्ये दक्षिणदिग्भवेन कविना रुद्रेण सृष्टे महा-
काव्येऽस्मिन्कृतवैरिवीरविजयः सर्गस्तु विंशोऽगमत् ॥१०१॥

इति श्रीमदखिलभूपालमौलिमुकुटललाममालामरीचिवीचीचुम्बितचरणसरोज-मयूरगिरिकेसरिश्रीमहाराजाधिराजश्रीनारायणशाहोद्योजितदाक्षिणात्यरुद्रक-वीन्द्रविरचिते राष्ट्रौढवंशे महाकाव्ये प्रतिवीरविजयो नाम विंश-तितमः सर्गः ॥

समाप्तम् ।

## An alphabetical index to the geographical names in the Râshtraudhavaṇsamahâkâvya.




| | Page | line |
|---|---|---|
| अङ्कलेश | १०५ | ५ |
| अङ्ग | ११ | २० |
| अनन्तपुर | २८ | ६; ५९. १२ |
| अमहल्ल | १३ | ४ |
| अरावी | ६१ | २४ |
| आह्यद | ११३ | १८ |
| इङ्गिरभूधर | १४ | २६ |
| उज्जयिनी | ९ | ४ |
| उत्कल | २० | ९ |
| कन्यकुब्ज | ४ | १६ & १९; ९. ८; ११. १२ |
| कर्णाट | ११ | २०; २०. ९ |
| कलिङ्ग | ११ | २०; २०. १० |
| काशी | ३८ | २ |
| कुरुक्षेत्र | ९ | १४ |
| कूर्परग्राम | ११२ | २३ |
| खानदेश | ११२ | १० |
| खामल(पुर) | ७४ | ६ |
| गालनशैल | ३९ | २२; ७६. ६ & १८; ११२. ८ |
| गुरुदेवरमालशैल | २७ | २१ |
| गुर्जर | १७ | २ |
| गोदा | ३९ | २; ६४, १३ |
| गोमुख | ७५ | १९ |
| गौड | २० | ९ |
| घाट | ६२ | ३ |
| चामराचल | २७ | १७ |
| चाम्पेयवाटी | ७५ | १६ |
| चिञ्चिलिग्राम | ९८ | ३ |

| | Page | line |
|---|---|---|
| चित्रकूट | ३६ | १५ |
| चिराट | ४२ | १३ |
| चोल | २० | ९ |
| जवारिराज्य | ७१ | ११ |
| जाम्बवटी | ६२ | ६ |
| जैत्रपुर | १७ | २८;६२.२०;९८.१३ |
| तलकुङ्कण | १६ | २४ |
| तापी | १०५ | २ |
| देवगिरि | १६ | २३;३५.२२;३६.१० |
| देवस्थानपुर | ६१ | २७; ७१. ८ |
| देवालयाली | ११३ | १५ |
| धायिट(पुर) | १११ | १६ |
| नन्दिग्राम | ११३ | १६ |
| नन्दुरबार | ११२ | ६ |
| नर्मदा or रेवा | १०५ | १६ & १८ |
| नवपुर | ५९ | १४ |
| निपालखेट | ३९ | ७ |
| नेरपुर | ११२ | ७ |
| पञ्चमुखी | १०५ | २ |
| पञ्चवटी | ६८ | १२ |
| पारवद | ११२ | १४ |
| पिप्पलग्राम | १६ | ११ |
| पिप्पलवाटिका | १०९ | ७ |
| पिशोलशैल | १९ | १२; २७. १७ |
| पीठपुर | ७१ | १२ |
| पुण्यस्तम्भ(नगर) | ११३ | ६ |
| पेण्डवलगिरि | ७२ | ४ |
| बारडुली | १७ | २४ |
| बालापुर | ११६ | ९ |

| | Page | line |
|---|---|---|
| बिल्वपुर | ११३ | १५ |
| बोपखल(ग्राम) | ४७ | ७ |
| भृगुक्षेत्र | १०४ | ११ |
| मण्डपाद्रि | २८ | २; ३५. २ |
| मयूरगिरि | १९ | १०; २७. १६; २९. ११; ५९. १२; ६०. ५; १०४. १६ |
| मालव | १७ | २ |
| मेघंकरपुर | ११६ | ६ |
| मोखघट्ट | ६२ | ८ & ९ |
| मोराचल | ६० | ५ |
| यज्ञखेट | १९ | १४ |
| यमुना | ९ | २४ |
| राधापुरी | ११३ | १६ |
| रामगिरि | २० | ११ |
| राम(नगर) | ७१ | २६ |
| ललिङ्गाचल | २१ | ३ |
| लाङ्गल | ३९ | २८ |
| लाट | ११ | २०; २०. ९ |
| लोहपुर | २१ | १५ |
| वङ्ग | ११ | २०; २०. ९ |
| वड्डुदरी | ४५ | १३ |
| वटग्राम | ७६ | ६ |
| वासुदेवपुर | ७५ | ३ |
| विराटदेश | ११६ | ४ |
| वेट(नगर) | २१ | ५. |
| व्याराख्यदुर्ग | ४० | १७ |
| शालागिरि | १८ | २; २०. ८; २६. २१; ४६. २० & २२ |
| शुक्रतीर्थ | १०७ | ८ |
| सथालनेर | ४२ | १२ |
| सप्तश्रृङ्गशैल | ३९ | ९ |
| सिडवाड | ४५ | १४ |
| सौरपाली | १२ | १२ |
| स्तम्भशैल | २७ | २१ |
| हरिगिरि | ६० | ५ |
| हस्तगिरि | ३९ | १२ |

